अभिमुखगते तस्मिन्नेव प्रिये बहुशो वद-
त्यवनतमुखं तूष्णीमिव स्थितं मृगनेत्रया ।
अथ किल चलच्छीलालोलं स एव तथेक्षितः
कथमपि यथा दृष्ट्या मन्ये कृतं श्रुतिलङ्घनम् ॥१०७॥

॥ अथ प्रियतममुद्दिश्यानुरागाभिव्यञ्जकप्रियसखीसमालिङ्गनोदाहरणम् ॥

तिर्यग्वर्तितगात्रयष्टिविषमोद्वृत्तस्तनास्फालना-
च्चुट्यन्मौक्तिकमालया सपुलकस्वेदोल्लसद्गण्डया ।
दूरादेव विलोकयत्यभिमते तद्वक्त्रदत्तेक्षणं
दुर्वारस्मरया तया सहचरी गाढं समालिङ्गिता ॥१०८॥

॥ उद्धतमन्मथोत्थचेष्टितोदाहरणानि श्लोकत्रयेणाह ॥

अनिमित्तं यद्विहसति निष्कारणमेव यत्सखीं वदति ।
दयितं विलोक्य तदियं शंसति तदधीनमात्मानम् ॥१०९॥

प्रादुष्यद्भुजमूलकान्तिललितामुत्क्षिप्य दोर्वल्लरीं
वल्गत्पीनपयोधरस्थलचलन्मुक्तावलीसुन्दरम् ।

1) AD यस्मिन्नेव 2) B त्यनवत° C °मेवास्थितं 3) B चलल्लज्जा° 4) A दृष्ट्रा C मन्ये दृष्ट्वा A कृति 5) om. ADE; BC om. अथ; B only: ॥ सहचरीसमालिंगनोदाहरणं ॥ 6) AB तिर्यग्वर्त्तित° D °मो वृ° CDE °त्तन-त्रुट्य° 7) A सुपुल° D सपुलकं A °द्गात्रया 8) A °कय ·भि° C °भिहंते 9) ACE °स्मरतापया C प्रियसखी 10) om. ADE; B उद्यन्मन्मथचेष्टा श्लोकत्रयेण 11) E यदसति A om. ति BCE नि.कार° AC om. यत् A यद्वदति 12) C तदिदं 13) B °कांतिकलताम्° D °कांतिललिताम्° A °दूप दो° 14) A °स्थल ·ल° C °चलान्मु° D °लुब्मु° E °लुलन्मु°

अङ्गुल्यग्रचलत्कलापवलयध्वानोपहूतस्मरं
तन्व्याः कुञ्चितलोचनं विजयते तत्कर्णकण्डूयनम् ॥११०॥

सखीऽवतंसं रशनां च किं चित्प्रियं समालोक्य समासजन्ती।
पुनस्तरां मा मुकुदो ददाति प्रत्यङ्गमावासमिव स्मरस्य ॥१११॥

व्याजृम्भणोल्लसितदन्तमयूखजालं
व्यालम्बमौक्तिकगुणं रमणे मुदेव।
ऊर्ध्वं मिलद्भुजलतावलयप्रपञ्च-
सत्तोरणं हृदि विशत्यपराध्युवास ॥११२॥

अन्योऽपि करोत्येतत्सर्वमुद्धतमन्मथा
दुरवस्था पुनः कान्तमभियुङ्क्ते स्वयं यथा ॥११३॥

॥ तद्वचनोदाहरणम् ॥

उल्लंघ्यापि सखीवचः समुचितामुत्सृज्य लज्जामलं

[1]) BE अंगुल्या प्रचलत्क° B °त्कपोल° A °लापि° D °लापविलसध्वा-
नोप° A °वस्थानो° C °ध्वानो° E °त्कलापवलयध्वानो° [2]) A तन्व्या C सख्या·
D तन्व्याः A °चनं समभवत्कर्णस्य क° [3]) BCDE रसनां D तयालोक्य E
सदालोक्य AC समाश्रयन्ती D समासृजती [4]) D पुरस्तरां A प्रत्यग्रम° AC °मावास°
[5]) A °मयूखमाल- B °मरीचिजालं C °जाल E मयूखजाल [6]) BD व्यालंबि E
व्यालं।बे C रमणेन CDE मुदेव [7]) B ऊर्ध्वमि° D ऊर्ध्व लसद्भुजलतावलतावलय°
[8]) A सन्तोरणं D सतो° In A the r. विशत्य° is intimated. B वसत्य°
CE विशत्य° AC °रा व्युदासे E ऽध्यवास [9]) C °तत्पूर्व° A °मुधत° B °मुद्धत
D °मुधत° A °थात् [10]) D दूरावस्थं C °स्था च ता ABDE °युङ्क्ते [11]) *om.*
ADE; B तद्वचने श्लोकः [12]) A समुदितामुल्लङ्घ्य लज्जानदो B समुचितमुत्सृज्य
लज्जाभरं CE °तामुत्सृज्य C लज्जाम् (sic)

क्षिप्त्वा भीतिभरं निरस्य च निजं सौभाग्यगर्वं मनाक् ।
आज्ञां केवलमेव मन्मथगुरोरादाय नूनं मया
त्वं निःशेषविलासिवर्गगणनाचूडामणिः संश्रितः ॥११४॥

॥ एतस्याः प्रियदर्शने सुखानुभवस्वरूपम् ॥

चक्षुर्मीलति सानन्दं नितम्बः प्रस्रवत्यपि ।
वेपते च तनुस्तन्व्यास्तस्यास्तद्दर्शने यथा ॥११५॥

॥ तथैवोदाहरणम् ॥

मीलन्मन्थरचक्षुषा परिपतत्काञ्चीग्रहव्यग्रया
गाढानङ्गभरस्रवज्जघनया कम्पोपरुद्धाङ्गया ।
सर्वाङ्गश्वथुकारको ऽप्यबलया संकेतके कौतुका-
दास्तां रन्तुमहो निरीक्षितुमपि प्रेयान्न संभावितः ॥११६॥

॥ अथ नायकं प्रति मुग्धावस्थाभिव्यञ्जकसखीवचनेन लक्षणोदाहरणान्याह ॥

नाभियुङ्क्ते स्वयं कन्या मुग्धत्वाद्दुःस्थितापि तम् ।
तदवस्थां तु कान्ताय तत्सखी कथयेद्यथा ॥११७॥

1) C त्यक्त्वा E भित्वा 2) B धात्ता D °दाय मूर्ध्ना मया 3) A °विलास° E °लासं सिवगणना° C °गणनं BE °मणे 4) *om.* ADE; B ॥ अथ प्रियदर्शनानुबंधः ॥ C °भवस्व° 5) B दिग्गालोकास्यसंश्रोयो नितं प्रश्रवत्यपि A नितम्बं 6) E °स्तन्वो तस्या° 7) *om.* ACDE 8) D परिलसत्कां° 9) In B the r. गाढानन्द° is mentioned; AE °स्रवद्गमणया BD °स्रवन्त° 10) A सर्वाङ्गं च° B सर्वांनं C सर्वांगि E सर्वांगं CD °कारके E °कारका ऽप्य° 12) *om.* ADE; B only ॥ नायकं प्रति मुग्धावस्था ॥ C °व्यञ्जक° C °णोदाहरणोचाह 13) BCD °युङ्क्ते E °युङ्क्ति B °द्दुरिथ° CD °त्वादुरिथ° A ताम् 14) ACE तदवस्था A तत्सखे

निःश्वासेषु स्खलति कदलीवीजनं तापसंप-
न्नेत्राम्भोभिर्घटिति पतितैः सूच्यते तत्स्तनान्तः ।
तस्याः किं चित्सुभग तदभूत्तानवं त्वद्वियोगा-
द्येनाकस्माद्वलयपदवीमङ्गुलीयं प्रयाति ॥११८॥

अनन्यशरणा स्वीया स्तद्धार्या पराङ्गना ।
अस्यास्तु केवलं प्रेम तेनैषा रागिणी मता ॥११९॥

॥ अथ वेश्यालक्षणम् ॥

सामान्यवनिता वेश्या सा वित्तं परमिच्छति ।
निर्गुणेऽपि न विद्वेषी न रागः स्याद्गुणिन्यपि ॥१२०॥

तत्स्वरूपमिदं प्रोक्तं कैश्चिद्ब्रूमो वयं पुनः ।
बलवत्यानया युक्त्या तासामप्यनुरागिताम् ॥१२१॥

शृङ्गाराभास एव स्याद्यदि ता रागवर्जिताः ।
तद्व्यापारोऽथ वा तासां स्मरः किं भक्तितो बकैः ॥१२२॥

[1]) BDE निश्वा° A निश्वासे यत्स्खलति A °वेजनं C *om.* संप B °म्भोभि स्थगितपतितैः D नेत्राभोभिश्चिरनिपतितैः A °र्फटिति E °भिः स्थिमितिपतिते E सिच्यते टाहि स्त° A सूच्यते · · नान्त. B °ते च स्त° B तास° [3]) E °योर्गो येना° [5]) A स्वेया धनहार्या C चनहार्या A तेनैवां C रागिणो [7]) *om.* BDE; A ॥ अथ वेश्या वर्ण्यते ॥ [9]) E पि न च द्वेषो A विद्वेष्यो AD नानुरागो गुणेष्वपि (D गुणि°) C न दोषः स्यान्नानुरागो गुणिन्यपि [10]) A कश्चिद्ब्रूमो [11]) A त्रलवनया° CE वर्णयत्यनया (C °त्या) A युक्ता नासा° E तन्यामप्य° AE °रागिता [12]) AC °रभास E °भास D तां रागवर्जितां B °र्जिता [13]) E न व्यापारो BCD बकैः

तस्मात्तासामपि क्वापि रागः स्यात्किं तु सर्वदा ।
धनार्थं कृत्रिमैर्भावैर्ग्राम्यान्व्यामोहयन्ति ताः ॥१२३॥

लिङ्गी प्रच्छन्नकामश्च नर्मन्यश्च षण्ढकः ।
सुखप्राप्तधनो मूर्खः पितृवित्तेन गर्वितः ॥१२४॥

इत्यादीन्प्रथमं ग्राम्याञ्ज्ञात्वाकृष्य च तद्धनम् ।
अपूर्वा इव मुञ्चन्ति तानेतास्तापयन्ति च ॥१२५॥

किं तु तासां कलाकेलिकुशलानां मनोरमम् ।
विस्मारितापरस्त्रीकं सुरतं ज्ञायते यथा ॥१२६॥

॥ तदुदाहरणम् ॥

गाढालिङ्गनपीडितस्तनतटं स्विद्यत्कपोलस्थलं
संदष्टाधरमुक्तसीत्कृतमतिभ्राम्यद्भ्रु नृत्यत्करम् ।
चाटुप्रायवचो विचित्रभणितं घातैर्नखैश्चाङ्कितं
वेश्यानां धृतिधाम पुण्यधनुषः प्राप्नोति धन्यो रतम् ॥१२७॥

[1]) B स्यात्किं न AC सर्वथा [2]) A °ग्राम्यान्संमोह° C °भावै ग्राम्यं भावै व्यामोहयंति ताः E °ग्रीम्य व्या° [3]) B प्रच्छन्नभावश्च AC नर्मन्यश्च A शण्टक BC संडयः D षंडकः E खंढकः [4]) E मूर्खः B पितृवत्तेन E दर्प्पित: [5]) B इत्यादि प्रथमं ज्ञात्वा ग्राम्यद्रुर्यंति तद्धनं C इत्यादि प्र° ग्राम्य ज्ञात्वाकृत्य च D °म ग्राम्यान् ज्ञात्वाकृत्य च E इत्यादि प्र° ग्राम्या ज्ञात्वाकृ° [6]) D अपूर्वमिव E अपूर्वानिव [7]) C °केलिः [8]) A विस्मितानां पर° [9]) *om.* ACDE [11]) D संदृ° B °तमनि° C तमभिभ्रांत्या प्रनृत्य° D °तमभिभ्राम्यद्रु E °तमभीभ्राम्रु [12]) D corr. °भणितं D घातैः स्तनैश्चांकितं E घातैर्नखैश्चाश्रितं [13]) A °धनुषा C °धनुषो AC धन्यो रतं सेवते

॥ पुनरपि वेश्याप्रशंसा प्रोक्तत्रयेण ॥

ईर्ष्या कुलस्त्रीषु न नायकस्य निःशङ्ककेलिर्न पराङ्गनासु ।
वेश्यासु चैतद्वितयं प्ररूढं सर्वस्वमेतास्तदहो स्मरस्य ॥१२८॥

कुप्यत्पिनाकिनेत्राग्निज्वालाभस्मीकृतः पुरा ।
उज्जीवितः पुनः कामो मन्ये वेश्याविलोकितैः ॥१२९॥

आनन्दयन्ति युक्त्या ताः सेविता घ्नन्ति चान्यथा ।
दुर्विज्ञेयाः प्रकृत्यैव तस्माद्वेश्या विषोपमाः ॥१३०॥

॥ अथ नायिकानामानि ॥

स्वाधीनपतिकोत्का च तथा वासकसज्जिका ।
अभिसंधिता विप्रलब्धा खण्डिता चाभिसारिका ॥१३१॥

प्रोषितप्रेयसी चैव नायिकाः पूर्वसूचिताः ।
ता एवात्र भवन्त्यष्टाववस्थाभिः पुनर्यथा ॥१३२॥

॥ अथ स्वाधीनपतिकालक्षणम् ॥

यस्या रतिगुणाकृष्टः पतिः पार्श्वं न मुञ्चति ।
विचित्रविभ्रमासक्ता सा स्वाधीनपतिर्यथा ॥१३३॥

---

1) *om.* ACDE 2) A ट्च्छा C कुल° B तु 3) B वैश्यासु C वर्तिं 5) A यज्जी° D पुनर्मारो A °वलोकनैः BC °वलोकितै D °विलोकनै 6) C °यासु° A युक्त्यारताम् B सेविता. C नान्यथा 7) A तस्माद्वेश्या BD °वमा 8) *om.* ADE; B यथात्र स्वस्वनायिकालक्षणम् C यत्र 9) A °पतिकोत्का च E °पतिकुत्का च A तथा · · सक° 10) D *om.* अभि A *om.* ता E *om.* वि DE °ब्धा च C °नाभिचा° 11) D चेति E नायका. 12) D एता एवमवंत्य° 13) *om.* ADE 15) D विविभ्रमतत्ता कृता B °मासक्ता स्वाधीनपतिका यथा

॥ तथोदाहरणम् ॥

लिखति कुचयोः पत्त्रं कण्ठे नियोजयति स्रजं
तिलकमलिके कुर्वन्गण्डादुदस्यति कुन्तलान् ।
इति चटुशतैर्वारं वारं वपुः परितः स्पृश-
न्विरहविधुरो नास्याः पार्श्वं विमुञ्चति वल्लभः ॥१३४॥

॥ अथोत्कालक्षणम् ॥

उत्का भवति सा यस्याः संकेतं नागतः प्रियः ।
तस्यानागमने हेतुं चिन्तयत्याकुला यथा ॥१३५॥

॥ अथोत्कोदाहरणम् ॥

किं रुद्धः प्रियया कया चिदथ वा सख्या समुद्वेजितः
किं वा कारणगौरवं किमपि यन्नात्रागतो वल्लभः ।
इत्यालोच्य मृगीदृशा करतले संस्थाप्य वक्त्राम्बुजं
दीर्घं निःश्वसितं चिरं च रुदितं क्षिप्ताश्च पुष्पस्रजः ॥१३६॥

॥ अथ वासकसज्जालक्षणम् ॥

1) *om.* ACDE 2) BCDE पत्रं 3) A कुर्वन्नागादु° C कुर्वन् रागादु° D कुर्वन्नर्वागुद्° E कुर्वन सर्वादु° B °दुदस्य च 4) C वयः A स्पृशद् 5) B यस्याः C चास्याः B न मुंचति 6) *om.* ADE; B *om.* लक्षणं 7) A उत्का ACE यस्या AE वासके 8) D तस्याः ना° D चिंतयंत्या° 9) *om.* cdd. 10) C ममोद्वेजितः D ममोद्वे° E ममोद्वे° B °जितः 11) A यन्नायारतिर्जल्पलभः C यन्नागतो DE यन्नापागतो 12) D °लोक्य 13) A निश्वसितं B निश्वसितं C निश्वसितो D निःश्वसित E दीर्घनिश्वसितं C च रुचिर 14) *om.* ADE: B वासकशय्याया ल°

भवेद्वासकसज्जासौ सज्जिताङ्गरतालया ।
निश्चित्यागमनं भर्तुर्द्वारेक्षणपरा यथा ॥१३७॥

॥ अथ वासकसज्जोदाहरणम् ॥

दृष्ट्वा दर्पणमण्डले निजवपुर्भूषां मनोहारिणीं
दीपार्चिःकपिशं च मोहनगृहं त्रस्यत्कुरङ्गीदृशा ।
एवं नौ सुरतं भविष्यति चिरादद्येति सानन्दया
कामं कान्तदिदृक्षया विलसिता द्वारे दृगारोपिता ॥१३८॥

॥ अथाभिसंधितालक्षणम् ॥

निरस्तो मन्युना कान्तो नमन्नपि यया पुरा ।
दुःस्थिता तं विना साभिसंधिता कथिता यथा ॥१३९॥

॥ अथाभिसंधितोदाहरणम् ॥

यत्पादप्रणतः प्रियः परुषया वाचा स निर्वासितो
यत्सख्या न कृतं वचो जडतया यन्मन्युरेको धृतः ।

[1]) D भवेद्वा सज्जा सा D °ज्जता° A °लये [2]) A निश्चत्या° D °क्षया परा [3]) om. ACDE; B ॥ वासकसज्जोदाहरणं ॥ [4]) C om. मण्डले C °वपुरूपां [5]) B °कपिशा B °गृहे E °गृह तन्व्या कु° [6]) D न. C सुतरां [7]) B कान्तदिदृ° A तिलकिता C तिलधिता DE °क्षयातिलालिता (D °ता) [8]) om. ADE; B om. लक्षणं [9]) A यया पुन. C पुरा यथा D पुनः [10]) B दुःस्थिता C °संधितेति मता यथा A कथिता बुधै. [11]) om. CDE; B om. अथ A only ॥ यथा ॥ [12]) A प्रिया D पति. E पुरुषया B निर्वासितो D निर्वासितो [13]) D यन्मन्यु इत्याहृत. A वृतः

पापस्यास्य फलं तदेतदधुना यच्चन्दनेन्दुद्युति-
प्रालेयाद्रिसमीरपङ्कजविसैर्गात्रं मुहुर्दह्यते ॥ १४० ॥

॥ अथ विप्रलब्धालक्षणम् ॥

प्रेष्य दूतीं स्वयं दत्त्वा संकेतं नागतः प्रियः ।
यस्यास्तेन विना दुःस्था विप्रलब्धा तु सा यथा ॥ १४१ ॥

॥ अथ विप्रलब्धोदाहरणम् ॥

यत्संकेतगृहं प्रियेण कथितं संप्रेष्य दूतीं स्वयं
तच्छून्यं सुचिरं निषेव्य सुदृशा पश्चाच्च भग्नाशया ।
स्थानोपासनसूचनाय विगलत्सान्द्राञ्जनैरश्रुभि-
र्भूमावक्षरमालिकेव रचिता दीर्घं रुदत्या शनैः ॥ १४२ ॥

॥ अथ खण्डितालक्षणम् ॥

कुतश्चिन्नागतो यस्या उचिते वासके प्रियः ।
तदनागमसंतप्ता खण्डिता सा मता यथा ॥ १४३ ॥

1) D पापस्यास्य फलं B यच्चंदनं दुन्दुति C यच्चदनं दुधुति E यच्चद्रिः सानां दुधुति A °च्युति 2) A प्रालेयांनु° CD °यांनु° E °यानु° A °विसै° B °त्रिसै° CD °त्रिसं° E °विसे° 3) om. ADE; B om. लक्षणम् 4) E प्रेक्ष्य D गत्वा 5) D दुस्था C दुस्था D दुंस्थां E दुःस्था प्रस्थुा साभ्रयया BCD °लब्धा च 6) om. ACDE 7) In A the r. यत्न× केत° is mentioned. E संप्रेक्ष्य 8) B तच्छूर्यं (sic) C एतज्ञान्यं D निवेश्य A om. सुदृ 9) D °पायनं° B °सू-चनाय A °शुचि- 10) ACE लिखिता B निहिता BDE रुदंत्या C रुदंत्याज्ञया 11) om. ADE; B om. लक्षणम् 12) C वस्य D वासरे E वासिके 13) D तदागमन° B °संप्राप्ता

॥ तयोदाहरणम् ॥

सोत्कण्ठं रुदितं सकम्पमसकृद्यातं सबाष्पं चिरं
चक्षुर्दत्तु निवेशितं सकरुणं सख्या समं जल्पितम् ।
नागच्छत्युचितेऽपि वासकविधौ काले समुद्विग्नया
तत्तत्किं चिदनुष्ठितं मृगदृशा नो यत्र वाचां गतिः ॥१४४॥

॥ अथाभिसारिकालक्षणम् ॥

या निर्लज्जीकृता बाढं मदेन मदनेन वा ।
अभियाति प्रियं साभिसारिकेति मता यथा ॥१४५॥

॥ तयोदाहरणम् ॥

नो भीतं तडितो दृशा जलमुचां तद्दर्शनाकाङ्क्षया
नो गर्जिद्गणिता भृशं श्रुतिसुखं तद्वाचि संचिन्त्य च ।
धारापातसमुद्भवा न च मता पीडा तदालिङ्गनं
वाञ्छन्त्या दयिताभिसारणविधौ तन्व्या परं तत्परे ॥१४६॥

॥ अथ प्रोषितपतिकालक्षणम् ॥

1) *om.* ACDE 2) B °सकृद्रात्रं; in margin r. of the text. ABCD सत्राष्पं E सबाषो D चिराच् 3) A निरोपितं 4) D वासर° 5) CE *om.* तत् once B °नुष्ठितं CDE °नुष्टितं 6) *om.* ADE; B *om.* लक्षणम् 7) BD निर्लज्जा कृ° A गाढं BC वाढं D बाला ADE मदनेन मदेन D च A °सारिकेति B °सारिकाभिमता D °सारिका कथिता C only has अभियाति साभिसारिकेति मता ॥ 9) *om.* ACDE 10) A भीति A न वा instead of दृशा 11) A गर्जिगुं° (sic) DE गर्जितगणिता C गर्जितगणितं A °सत्वं C तद्वा स° 12) A °समुद्भवा CD न गणिता E न च मताः B °लिंगनं 13) B तद्धया 14) *om.* ADE; B ॥ अथ प्रोषिता ॥

कुतश्चित्कारणाद्यस्याः पतिर्देशान्तरं गतः ।
दत्त्वावधिं भृशार्ता सा प्रोषितप्रेयसी यथा ॥ १४७ ॥

॥ यथोदाहरणम् ॥

उत्क्षिप्यालकमालिकां विलुलितामापाण्डुगण्डस्थला-
द्विश्लिष्यद्वलयप्रपातभयतः प्रोन्नम्य किं चित्करौ ।
द्वारस्तम्भनिषण्णगात्रलतिका केनापि पुण्यात्मना
मार्गालोकनदत्तदृष्टिरबला तत्कालमालिंग्यते ॥ १४८ ॥

निःश्वाससंतापसखीवचोभिश्चिन्ताश्रुपातादियुता सखेदा ।
वाच्या प्रलब्धा गतभर्तृकोत्काभिसंधिता खण्डितया स-
हात्र ॥ १४९ ॥

विचित्रमण्डना हृष्टा भवेत्स्वाधीनभर्तृका ।
तथा वासकसज्जापि सा किं त्वागतुकप्रिया ॥ १५० ॥

कुलजान्याङ्गना वेश्या त्रिधा स्याद्भिसारिका ।
यथैवोक्तास्तथैवान्याः स्वाधीनपतिकादयः ॥ १५१ ॥

1) C कुतश्चि° 2) D om. सा D गयोपि° B मता 3) om. ACDE 5) A °दलय ··· भयत. ACD प्रोन्नम्य B का चित्क° 6) D °त्रिपन्न° 7) B °मालिंगिता B adds: ॥ इति नायकोदाहरणं ॥ C ॥ इत्यष्टनायिकोदाहरणानि ॥ 8) BCE निश्वा° D °सखीतनोक्तिः चिन्ताश्रु° E °सखीप्रचोभि° B °चोभिर्भृताश्रु° A °युतासादि° C °युता. सखेदा. 9) A वाच्या B वा त्रिप्र° C ता विप्र° C °तिताः 10) CE °नासका च° 11) B स्वाधिका त्वागतु° D °रि किं तु गतांतु-कप्रिया 12) A कुलटा° 13) C °क्ता तथा नान्या D °स्तथा चान्या. B °थान्या D °थान्या. D °पतिका तथा

॥ अथ स्वकीयापरकीयाभिसारिकालक्षणम् ॥

कुलजा संवृता त्रस्ता सव्रीडा तदृहं व्रजेत् ।
नायकं परनारी तु समन्तादनवेक्षिता ॥ १५२ ॥

॥ अथ वेश्याभिसारिकालक्षणम् ॥

सखीयुक्ता मदाधिक्यात्स्फारिताक्षी त्वशङ्किता ।
सशब्दाभरणा कामं वेश्या सरति नायकम् ॥ १५३ ॥

त्रयोदशविधा स्वीया द्विविधा च पराङ्गना ।
एका वेश्या पुनश्चाष्टाववस्थाभेदतो मताः ॥ १५४ ॥

पुनश्च तास्त्रिधा सर्वा उत्तमामध्यमाधमाः ।
इत्थं शतत्रयं तासामशीतिश्चतुरुत्तरा ॥ १५५ ॥

॥ अथोत्तमालक्षणम् ॥

दोषानुरूपकोपा यानुनीता च प्रसीदति ।
रज्यते च भृशं नाथे गुणाह्रार्योत्तमेति सा ॥ १५६ ॥

1) *om.* ADE; C °परकीयावेश्याभि° 2) A कुलटा ABC सव्रीडं A च दुरं (sic) व्र° E च हृतं व्रजेत 3) E च A सदान्यैरनवेक्षिता D सर्वदान्यैर्-वीक्षिता E सदान्यैरप्यवीक्षिता In B margin the gloss दृष्टा is written 4) *om.* ACE 5) B सख्या यु° D °युता मदन्विता स्फा° C °धिक्रा स्फा° AE °क्षी न प्र° C °क्षी चमत्कृता D °क्षी गर्वान्विता 7) From this line to stanza 164, 2 lost in A 8) D °भेदता मता. E °भेदतोऽत्र ता AB मता 9) C तास्त्रिधा भिन्ना CD उत्तमाधमध्यमा 10) B °त्तरं E °त्तर 11) *om.* DE 12) E सु प्रसी° 13) C °त्तमा यथा

॥ अथोत्तमोदाहरणम् ॥

कान्ते किं कुपितासि कः परजने प्राणेश कोपो भवेत्
कोऽयं सुभ्रु परस्त्वमेव दयिते दासोऽस्मि किं ते परः ।
इत्युक्त्वा प्रणतः प्रियः क्षितितलादुत्थाप्य सानन्दया
नेत्राम्भःकणिकाङ्किते स्तनतटे तन्व्या समारोपितः ॥ १५७ ॥

॥ अथ मध्यमालक्षणम् ॥

दोषे स्वल्पेऽपि या कोपं धत्ते कष्टेन तुष्यति ।
प्रयाति कारणाद्रागं मध्यमा सा मता यथा ॥ १५८ ॥

॥ अथ मध्यमोदाहरणम् ॥

प्रस्फारस्फुरिताधरापि विलसद्गण्डस्थलप्रस्खल-
द्धर्माम्भःकणिकापि भङ्गुरतरभ्रूभेदभूयाप्यलम् ।
पादान्तप्रणते प्रिये प्रकटयत्यन्तःप्रसादं प्रिया
केशान्नूपुरमण्डलीशवलितानुन्मोचयन्ती शनैः ॥ १५९ ॥

॥ अथाधमालक्षणम् ॥

[1]) *om.* CDE; B *om.* अथ  [2]) C किं B चहिते  [3]) B चहरजेव
[4]) C °क्त्वा D °त्वा E °त्वा E प्रणतं C *om.* त. D वतिः C °दुत्थाय गारंदृया
[5]) D °कांचिते In D the st. बाले नाथ Amaru v. 53 (= Ind. Sprüche 4443) is interpolated  [6]) *om.* DE; C ॥ अथ मध्यमलक्षणं ॥  [7]) In B st. 158 is *om.* C गुष्यति E सुंचति  [9]) *om.* edd.  [10]) B *om.* प्र C प्र-स्फारस्फु° D °धरा प्रतिस्फद्र°  [11]) E °रतरं CE °भूतं°  [12]) D पादांत प्र° E पादांत प्र° C प्रियो  [13]) D °ले श° BCD °शवलि°  [14]) *om.* DE; B *om.* लक्षणम्

या कुप्यति विना दोषैः स्निह्यत्यनुनयं विना ।
निर्हेतुकप्रवृत्तिश्च चलचित्तापि साधमा ॥१६०॥

॥ अथाधमोदाहरणम् ॥

यत्राधःकृतकामकार्मुककथोद्भाम्यद्भ्रुवोर्विभ्रमः
सद्यःप्रोद्गतचन्द्रकान्तिजयिनी यस्मिन्कपोलच्छविः ।
यत्र स्वेदकणावलुप्तमहिमा हारो ऽप्युरोजस्थले
को ऽयं मानिनि मत्प्रसादविमुखः प्रत्यग्रमानग्रहः ॥१६१॥

ज्ञातिकालवयोऽवस्थाभावकन्दर्पनायकैः
इतरा अप्यसंख्याः स्युर्नोक्ता विस्तारभीतितः ॥१६२॥

इत्यादि सकलं ज्ञात्वा स्वयं चालोक्य तद्विदाम् ।
कवीनां च विशेषोक्त्या ज्ञातव्याः सकला इमाः ॥१६३॥

रोमाञ्चवेपथुस्तम्भस्वेदनेत्राम्बुविभ्रमाः ।
वाच्याः संभोगशृङ्गारे कविना नायिकाश्रिताः ॥१६४॥

संबन्धिमित्रद्विजराजतीक्ष्णवर्णाधिकानां प्रमदा न गम्याः ।

1) C स्निग्धत्यनुयं 2) D °वृत्तिश्च C °श्च लचि° E °चित्तेति E साधना 3) *om.* CDE 4) In C काम twice 5) C °चंद्रविंब्रत° D °चंद्रबिंजत° E °चद्रबिंब्रत° 6) B °वलिप्त° C °णवविलुप्त° D °णावुल्पुप्त° (sic) 7) B कामिनि मत्प्रणामवि° 8) C वयो twice E ज्ञातिरूपकलावस्था° 9) B पुनग्ना अप्य° DE विस्तर° 10) D चालोच्य B ज्ञातव्या 13) Here A recommences. A वेपथस्सं° B कविनायका° D कविनायिका° ACE नायका° 14) C *om.* राज C °तीक्ष° D °द्वेन° A °वर्णादिकानां

व्यङ्गास्तथा प्रव्रजिता विभिन्नमल्लाश्च धर्मार्थमनोभवज्ञैः ॥१६५॥

अनेन मार्गेण विशेषरम्यं संभोगशृङ्गारमिमं वितन्वन् ।
भवेत्कविर्भावरसानुरक्तो विदग्धगोष्ठीवनितामनोज्ञः ॥१६६॥

॥ इति श्रीमद्रुद्रभट्टविरचिते शृङ्गारतिलकाख्ये काव्यालंकारे संभोगशृङ्गारो नाम प्रथमः परिच्छेदः ॥

1) A व्यङ्ग्यास्तथा D व्यंग्या° A °मित्राश्च 2) A रगेण A °रम्मुं D विदिव्वा' 3) E °रसानुविद्ध C °गोवनि° 4) B श्रीरुद्रविर° C श्रीरुद्रभट्ट° D श्रीरुद्रभट्ट° E श्रीभट्टरुद्रवि° BC °तिलके D *om.* शृङ्गा° C *om.* काव्या° 5) DE *om.* संभोग° नाम B °शृंगारे *om.* नाम C adds ॥ १ ॥ E समाप्तः

॥ अथ विप्रलम्भलक्षणम् ॥

विप्रलम्भाभिधानोऽयं शृङ्गारः स्याच्चतुर्विधः
पूर्वानुरागो मानाख्यः प्रवासः करुणात्मकः ॥ १ ॥

॥ अथ पूर्वानुरागलक्षणम् ॥

दंपत्योर्दर्शनादेव प्ररूढगुरुरागयोः ।
ज्ञेयः पूर्वानुरागोऽयमप्राप्तौ स भवेद्यथा ॥ २ ॥

॥ अथ पूर्वानुरागान्वितनायिकावाक्योदाहरणम् ॥

किं चन्दनै रचय मा च मृणालशय्यां
मा मा ममालि धुनु कोमलतालवृन्तम् ।
मुक्ताग्रहं विरचपङ्कजयोर्ज्ञनेषु
तत्संगमः परमपाकुरुते स्मराग्निम् ॥ ३ ॥

॥ अथ पूर्वानुरागावस्थास्थितनायकस्वरूपनिरूपणम् ॥

[1]) E has before: श्री नरस्वे: लेभ्य. रामस्तेभ्यो नमो गुरुभ्यः; *om.* ADE; B *om.* अथ C विलंभ° [2]) A °भिधानो [3]) A मनाख्य× B प्रकाश: [4]) *om.* ADE [5]) CD समुत्पन्नानुरागयोः (C °ना°) [6]) E °प्राप्तो या दशा यथा B संभवे° [7]) *om.* ADE; B ॥ अत्र पूर्वानुरागाख्य विप्रलंभवतीवाक्यं इद सहचरीं प्रति यथा ॥ C °गान्विनायिकावक्यो° [8]) A किं चन्दनैरथ च मुञ्च मृ° C *om.* च D °सय्यां [9]) A म मा [10]) A °ग्रहदर्शनेषु [12]) *om.* ADE; B ॥ पूर्वानुरागाख्यविप्रलंभावस्था°

यत्सारैरिव पङ्कजस्य घटितं यच्चन्द्रगर्भादिव
प्रोत्कीर्णं यदनङ्गसायकशिखाभासेव संवर्धितम् ।
यत्संसिच्य सुधारसैरिव रतेरास्थानभूमीकृतं
तद्भूयो ऽपि कदा सरोरुहदृशः पश्यामि तस्या मुखम् ॥ ४ ॥

मृणालकन्दलीचन्द्रचन्दनाम्बुरुहादिकम् ।
तत्रानयोः स्मरातङ्कशान्तये नैव सेवितम् ॥ ५ ॥

॥ अथ दशावस्था ॥

आलोकालापसंजातरागाकुलितचेतसोः ।
तयोर्भवेदसंप्राप्तौ दशावस्थः स्मरो यथा ॥ ६ ॥

अभिलाषो ऽथ चिन्ता स्यात्स्मृतिश्च गुणकीर्तनम् ।
उद्वेगो ऽथ प्रलापः स्यादुन्मादो व्याधिरेव च ॥ ७ ॥

जडता मरणं चैव दशमी जायते ध्रुवम् ।
असंप्राप्तौ भवन्त्येतास्तयोर्दश दशा यथा ॥ ८ ॥

॥ अथाभिलाषलक्षणम् ॥

व्यवसायो भवेद्यत्र बाढं तत्संगमाशया ।
संकल्पाकुलचित्तत्वात्सो ऽभिलापः स्मृतो यथा ॥ ९ ॥

[1]) D यसंद्रविंत्यादश्च A °दिव: [2]) B °शायक° C °सावक° [3]) E रतिरा° [4]) A यद्भूयो A सदा *om.* दृ [5]) A मृणालो° ACD °कदली° E °लीकंद [6]) A °तङ्कं शमयेन्नैव [7]) *om.* ACDE [8]) A °हारा° [10]) A *om.* stanzas 7 and 8 D स्यान्मृतिश्च [11]) B प्रलाप [13]) DE दशमं E त्तायते C यथा [14]) *om.* ADE; B °लापवत्या ल° [15]) BDE वाढं D °संगमेच्छया [16]) AD भिलाषो (A ष्टि°) मतो

॥ तत्रोदाहरणम् ॥

प्रविशति यथा गेहे ऽकस्माद्बहिश्च विचेष्टते
वदति च यथा सख्या सार्धं सहासमिवोत्सुका ।
दयितवदनालोके मन्दं यथा च चलत्यसौ
मृगदृशि तथा तस्यां शङ्के स्मरेण कृतं पदम् ॥१०॥

॥ अथ चिन्तालक्षणम् ॥

कथं स वल्लभः प्राप्यः किं कुर्यां तस्य तुष्टये ।
कथं भवेदसौ वश्य इति चिन्ता भवेद्यथा ॥११॥

॥ तयोदाहरणम् ॥

सत्यं दुर्लभ एष वल्लभतमो रागो ममास्मिन्पुनः
को ऽप्यन्यो ऽस्ति गुरुर्न चातिनिपुणाः सख्यो ऽस्य संबोधने।
संचिन्त्येति मृगीदृशा प्रियतमे दृष्टे श्लथां मेखलां
बध्नत्या न गतं स्थितं न च गलद्धासो न वा संवृतम् ॥१२॥

॥ अथ स्मृति ॥

द्वेषो यत्रान्यकार्येषु तदेकाग्रं च मानसम् ।

1) *om.* ACDE 2) D has before: श्रीगणाधीपतये B यथाकस्मादेहं वहिश्च CD °द्वहि° E तस्माद्बृच° 3) C *om.* च B तथा D मृगं B साकं C °मिहोत्सुका 4) AE दयितनयना° B *om.* च A चल° C यथापि चल° 5) AE तथैतस्या CD तथैवास्यां 6) *om.* ADE 7) AD स कथं BE मिष्ठये 8) B वश्य 9) *om.* ACDE 10) C सत्यं वल्लभ एष दुर्लभतमो 11) E को ऽ न्यश्चातिर्गुरुर्न A पि D न i. of ऽस्ति DE चापि नि° BC °पुणं. 13) CD बध्नता E बध्नंत्या 14) *om.* ADE 15) A द्वेषो न्यत्र च का° B द्वेषे C यत्रान्यद्वेषु E प्रद्वेषो ऽन्यत्र का°

श्वासैर्मनोरथैश्चापि चेष्टा तत्स्मरणं यथा ॥ १३ ॥

॥ तयोदाहरणम् ॥

इन्दुं निन्दति पद्मकन्दलदलीतल्पं न वा मन्यते
कर्पूरं किरति प्रयाति न रतिं प्रालेयधारागृहे ।
श्वासैः केवलमेव खेदिततनुर्ध्यायत्यसौ बालिका
यत्तत्कोऽपि युवा सखि स्मरसुहृच्चेतस्यमुष्याः स्थितः ॥ १४ ॥

॥ अथ गुणकीर्तनम् ॥

सौन्दर्यहसितालापैर्नास्त्यन्यस्तत्समो युवा ।
इति वाणी भवेद्यत्र तदिदं गुणकीर्तनम् ॥ १५ ॥

॥ तयोदाहरणम् ॥

तद्वक्त्रं हसितेन्दुमण्डलरुचि स्फारं तदालोकितं
सा वाणी जितकामकार्मुकरवा सौन्दर्यमेतस्य तत् ।
इत्थं संततमालि वल्लभतमध्यानप्रसक्तात्मन-
श्चेतश्चुम्बितकालकूटमिव मे कस्मादिदं मुह्यति ॥ १६ ॥

॥ यथोद्वेगः ॥

[1]) E °नोरथैश्चा° A चेट · स्म° B चेटो स्मर° C चेटात (i. e. चेटो) E चेष्टा च स्मरणं यथा [2]) *om.* ACDE [3]) D पद्मकांडकदलो° E पद्मकंद कदलो° [5]) D श्वासे. AB खिपति तनुं (B °नु) ज्ञातायसौ E °तनुर्ज्ञातेत्यसौ [6]) D *om.* ऽपि BE युवं inst. of सखि [7]) *om.* DE; A *om.* यग adds यथा C ॥ यथ गुणकीर्तनचेष्टालक्षणोदाहरणे ॥ [9]) ADE तदित्थं [10]) *om.* ACDE [11]) A °मण्डलनिति CDE °मंडलनतिस्फारं [13]) A ततमालि D °प्रसक्त° [14]) A °कम्पिति का° [15]) *om.* DE; A *om.* यथ B °लक्षणं C °लक्षणोदाहरणं

यस्मिन्नन्यमरम्यं स्यान्न च हर्षाय किं चन ।
प्रद्वेषः प्राणितव्येऽपि स उद्वेगः स्मृतो यथा ॥१७॥

॥ तस्योदाहरणम् ॥

अन्यागारं कलयसि पुरश्चक्रवाकीव चन्द्रं
वह्नोत्कम्पं शिशिरमरुता दह्यसे पद्मिनीव ।
प्राणान्धत्से कथमपि बलाद्गच्छतः शल्यतुल्यां-
स्तत्केनासौ सुतनु जनितो मान्मथस्ते विकारः ॥१८॥

॥ अथ प्रलापः ॥

वम्भ्रमीति मनो यस्मिन्नत्यौत्सुक्यादितस्ततः ।
वाचः प्रियाश्रिता एव स प्रलापः स्मृतो यथा ॥१९॥

॥ तस्योदाहरणम् ॥

इत्थं तेन निरीक्षितं न च मयाप्येवं समालोकित-
स्तेनोक्तं सुभगेन तत्र न मया दत्तं वचो मन्दया ।
तत्सत्यं कथयालि किं स सुभगः कुप्येन्न मह्यं गत
इत्युक्त्वा सुदृशा कयापि वलितग्रीवं दृशौ स्फारिते ॥२०॥

[1]) B स्यात् न A हर्षो न [2]) D संदेहः A प्रणि° B °तव्यो C °तव्य [3]) om. ACDE [4]) A °गारं and sup. रागं B °कारं [5]) B गाढोत्कंठा B दह्यते [6]) A चिराद्गच्छतन् A °तुल्यास् BD °तुल्यान् C °तुल्यां त° [7]) A मन्म° [8]) om. CDE; A ॥ प्रलापो यथा ॥ [9]) A यस्मिन्यात्यौ° [10]) A प्रियाश्च ता एव स प्रलापो मतो [11]) om. ACDE [12]) C तं न AC न च B च स E मया सो प्येवमालो° A °कित. D °कितं [13]) E तत् च मया [14]) B om. स A कुप्येत····इत्यु° B मह्युच्चकैर् D मह्यं विनाद् [15]) A °रितौ

॥ अथोन्मादः ॥

श्वासप्ररोदनोत्कम्पवसुधोल्लेखनैरपि ।
व्यापारो जायते यत्र स उन्मादः स्मृतो यथा ॥ २१ ॥

॥ तयोदाहरणम् ॥

देवीवानिमिषेक्षणा विलिखति क्षोणीं श्वसित्युच्चकैः
किं चिद्धायति निश्चलापि वलवद्रोमाञ्चिता कम्पते ।
रोदित्यङ्कगतां विलोक्य सुचिरं वीणामतिव्यापृता
स्वल्पैरेव दिनैरियं वरतनुः केनापि संशिक्षिता ॥ २२ ॥

॥ अथ व्याधिः ॥

संतापवेदनाप्रायो दीर्घश्वाससमाकुलः ।
तनूकृततनुर्व्याधिरष्टमो जायते यथा ॥ २३ ॥

॥ तयोदाहरणम् ॥

तापः शोषितचन्दनोदकरसः श्वासो विकीर्णोत्पलः
कर्पूराभिभवप्रचण्डपटिमा गण्डस्थले पाण्डिमा ।
म्लायद्बालमृणालनाललुलिता प्राप्ता तनुस्तानवं
तन्वंग्याः कथितः स्मरेण गुरुणा कोऽप्येष कष्टक्रमः ॥ २४ ॥

1) *om.* DE; A ॥ उन्मादः ॥ B °दलक्षणं 2) D स्वास° A °प्रमोदनो° DE °धालेख° 3) C °ते न्यत्र AC उन्माद् A मतो 4) *om.* ACDE 5) E °क्षणं C द्वसत्यु° 6) D चिद्रध्यायति C निश्चितापि A °ला च D *om.* पि 7) A °पृतां B °घृता D °वृतां E °पृतिः 8) A केनानुसंज्ञि° 9) *om.* ADE 10) C *om.* प्रायो 11) A वृता गनुतनव्या° C तन्व° D तथा 12) *om.* ACDE 13) C शोषित° D °दकभृः A द्वासो यको° B श्वासाग्निको° C श्वागात्रको° 14) A कर्पूराभिनवप्रवर° B कर्पूरप्रभवं प्रचड° D °भवः प्र° 15) A म्लायद्बाला° DE °नाम्नतिश्च B °स्तानवं 16) AC °द्र्या A नचित° ABC कथित° D लेच

॥ अथ जडता ॥

अकाण्डे यत्र हुंकारो दृष्टिः स्तब्धा गता स्मृतिः ।
श्वासः समधिकः कार्श्यं जडतेयं स्मृता यथा ॥ २५ ॥

॥ तयोदाहरणम् ॥

दृष्टिर्निश्चलतारकाधरदलं श्वासैः कृतं धूसरं
प्राप्तं वासरचन्द्रबिम्बपदवीं वक्त्रं विनष्टा स्मृतिः ।
हुंकारः परमेक एव वचनस्थाने स्थितः सांप्रतं
मन्ये ऽस्याः कुसुमायुधः सशिबिरः प्रत्यङ्गमावासितः ॥ २६ ॥

॥ अथ मरणावस्था ॥

उपायैर्विविधैर्नार्या यदि न स्यात्समागमः ।
कन्दर्पशरभिन्नाया मरणं जायते ततः ॥ २७ ॥

पुंसो ऽपि हि भवन्त्येता दशावस्था मनोभवात् ।
मरणं किं तु सौन्दर्यात्तयोः कैश्चिन्न बध्यते ॥ २८ ॥

अन्ये तदपि बध्नन्ति प्रत्युज्जीवनवाञ्छया ।
वृत्तानुवादे तच्छस्तमुत्पाद्ये प्रायशो न हि ॥ २९ ॥

[1]) om. DE; AB om. अथ B adds लक्षणं [2]) A नकाले CDE दृष्टि [3]) CE प्रयासः समधिका (C °मा°) D °धिकं कार्श्यं A मता [4]) om. ACDE [5]) C °तारिका° A °तलं [7]) B वचनः E स्थाने ततः D स्थितं ABD सशिविरः CE सशृधि. E °मावेशितः [9]) om. ACDE [10]) A उपायैर्व्रतिनैर्वापि DE °यैर्वनितेर्नार्या [11]) D °शराजिताया [12]) D मनाःपुत्र [13]) A किं च सौन्दर्यात्तयो× किं च न बाध्यते BD °र्यान्नु तु कैश्चिन्नित्र° C बुध्यते [14]) A °ज्जन° [15]) D °वादेन A ततत्यमुद्यत्ने in margin ये B तद्गान्नु° प्रायशोदित E तत शस्त°

एकस्मिंस्तु मृतेऽप्यन्यो यदि जीवेत्कथं चन ।
का स्नेहगणना तत्र म्रियते चेन्न संगमः ॥ ३० ॥

पूर्वं नारी भवेद्रक्ता पुमान्पश्चात्तदिङ्गितैः ।
ततः संभोगलीलेति स्वभावसुभगा स्थितिः ॥ ३१ ॥

अन्यथापि न दोषः स्याद्यदि प्रेम समं द्वयोः ।
रक्तापरक्तवृत्तिश्चेच्छृङ्गाराभास एव सः ॥ ३२ ॥

अयं च प्रायशस्तज्ज्ञैरित्थं हास्यो निबध्यते ।
निर्धनेन मया सार्धं वेश्ये मानय यौवनम् ॥ ३३ ॥

अनुरक्तो भवेद्यस्यां नायकस्तत्सखीजनम् ।
साम्ना मानेन दानेन बाढमावर्जयत्यसौ ॥ ३४ ॥

तस्याग्रे तत्कथां कुर्वन्स्वाभिप्रायं प्रकाशयेत् ।
तदभावे नियुञ्जीत कां चित्प्रव्रजितादिकाम् ॥ ३५ ॥

तद्द्वारेण समाख्यातस्वभावो ज्ञाततन्मनाः ।
उपचारपरैर्लेखैः साधयेत्तामतन्द्रितः ॥ ३६ ॥

[1]) E एकस्मिन्तु A मृते त्यन्यो B मृतेऽन्यो A दवि [2]) CD मृयते BE संगतः C संघः D संभम. [3]) A पुमान्यश्चा तदोङ्गितैः [6]) B °वृत्तिश्च शृं° CE °वृत्तिस्तु शृं° B °राभाय [7]) B धनेन सा° AE हास्येनु B हास्येनुनु C हासे A बध्यते B वध्यते C वग्रध्यते [8]) In D this line is put before l. 11. A सार्कं [9]) C भवेयत्र D °जन. [10]) A दानेन मानेन D दाने मानेन BD वाढ° [11]) B तस्यामितत्क° E तद्ग्रे D प्रकाशले [12]) D न्ययुंजीत D °व्राजिका° BE °व्रजिका° A °व्रजितादिका. C °व्रजितादिकां [13]) B तद्वा° C ताद्वा° D तद्ं° C °तन्मना· BD °तन्मना [14]) B नयचार° A °लेर्षैनादरेपा° D °लेख्यैः

ततो दृष्ट्वा विविक्ते तामिन्द्रजालकलादिभिः ।
प्रयोगैर्ललितैः स्वैरं विस्मयं परमं नयेत् ॥ ३७ ॥

धात्रीसखीविशमनि रात्रिचारे महोत्सवे तीव्रभये वने च ।
निमन्त्रणे व्याधिमिषेण शून्ये गृहे तयोर्नूतनसंगमः स्यात् ॥ ३८ ॥

यदा रागो गुरुः सा च लभ्यते नैव याचिता ।
क्षीणोपायस्तदा त्वन्यां नायकः साधयेत्ततः ॥ ३९ ॥

परस्त्रीगमनोपायः कविभिर्नोपदर्शितः ।
सुन्दरं किं तु काव्याङ्गमिति मत्वा निगद्यते ॥ ४० ॥

वामता दुर्लभत्वं च स्त्रीणां या च निवारणा ।
तदेवं पञ्चबाणस्य मन्ये ऽहं परमायुधम् ॥ ४१ ॥

बहुमानाद्भयाद्वापि नृणामन्यत्र योषिति ।
प्रच्छन्नकामिता रम्या सतामपि भवेद्यथा ॥ ४२ ॥

॥ तयोदाहरणम् ॥

1) C दृष्ट्वा A °कलादि° 2) C प्रयोगैर्विविधै E च परं 3) B चारिचारे महोत्सवो E व्याधिमिति च BE शून्ये AC गेहे D गृहो E गृहि 6) ACE °दा त्वन्या B °दा नारीं साधयेन्नामतद्भित AE साधयेदिति C साधदिति 7) D °नो-पायाः C °भिर्न प्रद° D °र्शिता E °पदिश्यते 8) A काव्यङ्गं सकृत्रत्नाङ्गि° E काव्यांगमेतन्नेत निदर्शते B मया 9) From वामता to योषिति st. 54 lost in A 10) C तदेव D ता एव BD °बाणस्य CDE *om.* ऽहं CDE परमम° 12) BDE °कामितं BDE रम्यं BE तामपि 13) *om.* DE; C तद्दा°

जीर्णं तार्णकुटीरकं निवसनं तल्पीकृतं स्थण्डिलं
नीरन्ध्रं तिमिरं किरन्ति सलिलं गर्जन्ति एते घनाः ।
गच्छामीति वदत्यसावपि मुहुः शङ्काकुला केवलं
चेतश्चित्रमहो तथापि रमते संकेतके कामिनाम् ॥ ४३ ॥

॥ अथ मानप्रकारः ॥

स मानो नायिका यस्मिन्नीर्ष्यया नायकं प्रति ।
धत्ते विकारमन्यस्त्रीसङ्गदोषवशाद्यथा ॥ ४४ ॥

॥ तदुदाहरणम् ॥

किं चिद्बाष्पजलावलेशललिते नेत्रे मनाक्कुञ्चिते
रागो विस्फुरणानुबन्धरुचिरः संदर्शितो गण्डयोः ।
कम्पश्चाधरपल्लवे विरचितः कामं कुरङ्गीदृशा
नो जाने किमयं प्रिये प्रकटितः कोपोऽभिलाषोऽथ वा ॥४५॥

स प्रायशो भवेत्त्रेधा कामिनीनां प्रियं प्रति ।
अवेक्ष्य दोषमेतस्य गरीयान्मध्यमो लघुः ॥ ४६ ॥

॥ अथ गुरुमानः ॥

प्रतिनार्यां गते कान्ते स्वयं दृष्टे नखाङ्किते ।

[3]) D वदत्स्वसावपि C *om.* शंका [4]) CE हरते BCE कामिनो [5]) *om.* DE [6]) D has before: स मानो नायिकामिनां BE रमाना E नायका D यास्मि° C °र्षया [7]) C *om.* सङ्ग B °वसा° [8]) *om.* D; E मानाख्यविप्रलंभस्य शृंगारस्योदाहरणमाह । [9]) C °जलांचिले च ल° D °लेय° E °लाविले गि D समाकुंचिते [12]) C कोप प्रसादो थ वा D *om.* वा [13]) C मानिनीनां [15]) *om.* DE; C *om.* अथ B °मानभेद. [16]) C प्रतिभार्यां

तद्वासोदर्शने गोत्रस्खलिते च गुरुर्यथा ॥ ४७ ॥

॥ तस्योदाहरणम् ॥

बिम्बोष्ठः स्फुरति प्रयाति पटुतां गण्डस्थले शोणिमा
यातस्तिर्यगमू दृशौ च बलवद्भ्रूयुग्ममुद्राम्यति ।
इत्थं चण्डि तथा तवैष रुचिरः कोपक्रमो जृम्भते
ज्ञातोऽहं प्रणतीरपास्य सुतरामेतद्विदन्तुर्यथा ॥ ४८ ॥

॥ अथ मध्यममानः ॥

दृष्टे प्रियतमे रागादन्यया सह जल्पति ।
सख्याख्याते तथा दोषे मानोऽयं मध्यमो यथा ॥ ४९ ॥

॥ तस्योदाहरणम् ॥

वाचो वाग्मिनि किं तवाद्य परुषाः सुभ्रु भ्रुवोर्विभ्रमो
ऽप्युद्भ्रान्तः कुत एव लोलनयने किं लोहिते लोचने ।
नास्त्यागो मयि किं मुधैव कुपितेत्युक्ते पुरः प्रेयसा
मानिन्या जलबिन्दुदन्तुरपुटा दृष्टिः सखीष्वाहिता ॥५०॥

॥ अथ लघुमानः ॥

सविलासस्फुरच्चन्द्रर्वीक्षमाणेऽपरां प्रिये ।

[1]) B °ते वि C °ते ब [2]) om. CDE [3]) D पटतां E पांडिमा [4]) C ज्ञाते तिर्य° D याते तिर्य° B च चपलं भ्रू° [5]) C तथा E कोपगता [6]) CE नितरामे° [7]) om. DE; BC om. अथ C मध्यमान [8]) E संख्याते ब वा दोषे CE मानः स्यान्मध्यमो [10]) om. CDE [11]) B वाग्मिनि C तवात्र CE परुषा B भ्रुवो वि° [12]) DE इव [13]) B मुधैव D पुनः [14]) B °रसुधा [15]) om. DE; BC om. अथ; B °मानो यथा [16]) DE सविलासं स्फु° BD °क्षमाने C °क्षमाने D यं परा BE परा

किं चिदन्यमनस्के च ज्ञायते स त्लघुर्यथा ॥ ५१ ॥

॥ तयोदाहरणम् ॥

मामेव ताडय नितम्बिनि यद्यकस्मा-
त्कोपो भवेत्तव मुखं तु निरं किमेतत् ।
आनीयते शशधरानुकृतिं कपोल-
पालीप्लुतेन घनकज्जलनेत्रवारा ॥ ५२ ॥

देशकालबलात्कोपः प्रायः सद्यो ऽपि योषिताम् ।
ज्ञायते सुखसाध्यो ऽयं कृच्छ्रसाध्यो ऽपि कामिनाम् ॥ ५३ ॥

प्रज्वलितोज्ज्वलदीपं रतिगृहमिन्दूज्ज्वलं च सौधतलम् ।
मधुमधुरीकृतमधुकरमधुरध्वनिबोधितं च वनम् ॥ ५४ ॥

इत्यादिषु प्रदेशेषु मानिनीनामसंशयम् ।
मन्युर्गुरुतमो ऽप्याशु सुखसाध्यो भवेद्यथा ॥ ५५ ॥

दृष्ट्वा चन्द्रमसं मनोभववधूकेलिक्रियाकन्दुकं

[1]) CD व B °तेऽय  [2]) *om.* CDE  [3]) E has before श्रो:  [5]) C श्रायते E °कृति  [6]) D °पालि° C °ते घन° C adds: पतंज्जनारता वारां धरा (read धारा) नृत्यंतु केकिनः । यद कांतः कृतांतो वा दुःखस्यांतं करिष्यति ॥५३॥ cfr. Ind. Sprüche 3881. In C the following stanzas are accordingly numbered higher by one. B adds: ॥ इति माना. ॥  [7]) CDE सर्वो ऽपि [8]) E °ध्यो पि यं E कामिभिः  [9]) E °लं दोपं B तद्गृहमि°  [10]) E मधुविधुरी° AB °धुनि योषितां वचन  With योषितां A *recommences.*  C °*धिनं वचनं* D °तं विपिनं  [11]) A कामिनीनाम°  [12]) C मानो गु° A सुखसाध्यो  In D stanza 55 is placed before st. 54  [13]) C °केलिप्रिया° D °केलिकृता-कौतुकं

प्रोन्मीलन्नवमालतीपरिमलं चाघ्राय मानौपधम् ।
दीपार्चिःकपिशां विविक्तवलभीमालोक्य लोलदृशा
मानिन्या चटुमात्रकेण रमणे मानो मनाङ् मन्दितः ॥५६॥

मधुसमयशशधरोदयकन्दर्पमहादिकेषु कालेषु ।
मानो मनस्विनीनामतिसुखसाध्यो भवेद्भूम्ना ॥५७॥

चन्द्रश्चन्द्रमुखीक्ष्यतां क्षणमियं संभाव्यतां मञ्जरी
चूतस्य स्मरविद्विषि प्रियतमे कोपे ऽपि केयं रतिः ।
इत्युक्ते सुचिरेण तत्करतलं पादाग्रसंवाहना-
द्धुन्वत्याः सुदृशो बलात्पुलकिते ऽङ्गे च दोर्वल्लरी ॥५८॥

दूतीजनस्य पुरतो लघुरपि कोपो गुरूयते प्रायः ।
अभिनवदोषावसरे तथैव वनिताजनस्य यथा ॥५९॥

चरणपतनात्पत्युर्मन्यौ मनाक् शिथिलीकृते
त्यजति च किमप्युत्कम्पत्वं घनस्तनमण्डले ।
तदपि विलसत्साराङ्गाद्या प्रियानुनयेच्छया

[2]) D °कपिशं A °शां च चित्रवलभी° C ° शां तिचित्रजल° C °दृशा E लालदृशा [3]) E तन्वंग्या B °मात्रके पि न र° but पि del., as it seems CD °केन A मनाग्मन्दित. C मनाक् खडित. E मनाक मंद्रित [4]) E °शशि-धरोदये A °महोत्सवेषु B °महोदयेषु D °महोद्रिकेषु [5]) A °सुखसाध्यो [6]) B चयमिव [8]) BD इत्युक्ता E इत्युक्ता प्रगातस्य त° A °तल्ने C °वाहनं E °वाहने [9]) A तुन्वत्याल् C चुंवंत्या B कुन्वंत्या. E धुन्वंत्या B वलोन्पु° [10]) C °लि-सो गु° [11]) D °जन्यस्य A °जनस्यैव [12]) B °त्युर्माने [13]) A भजति च C चुजति च D किमप्युकं प्रापं घनस्तनमंडल्ने C घनमतुन्ने (sic) [14]) ADE चिर-रत्सार° C जिम्सता° D °च्या चिरादनवेक्षया E चिरानुनयेच्छया

कथमपि पुरो दृष्ट्वा दूतीं पुनर्भृकुटी कृता ॥ ६० ॥
चतुरचटुभिर्गाढाश्लेषैर्हठात्परिचुम्बनै-
र्मधुरवचनैर्वारं वारं गतोऽप्यतिमन्दताम् ।
अपरवनितासङ्गाल्लग्नं विलोक्य विलेपनं
कुवलयदृशः कोपः कान्ते पुनर्नवतां गतः ॥ ६१ ॥
साम दानं च भेदः स्यादुपेक्षा प्रणतिस्तथा ।
तथा प्रसङ्गविभ्रंशो दण्डः शृङ्गारक्रा न तु ॥ ६२ ॥
तस्याः प्रसादने सद्भिरुपायाः षट् प्रकीर्तिताः ।
सुन्दरास्ते निदर्श्यन्ते सन्तोदाहृतिभिर्यथा ॥ ६३ ॥

॥ अथ साम ॥

दुर्विनीतोऽपि पाल्योऽहं त्वया सुभ्रु क्षमाभृता ।
इति वाक्यं भवेद्यत्र तत्सामेति निगद्यते ॥ ६४ ॥

॥ तदुदाहरणम् ॥

सत्यं भामिनि दुर्जनोऽस्मि दयिते पाल्यस्तथापि त्वया
यो दोषः स लघुर्मृगाक्षि नियतं दीनस्य मे क्षम्यताम् ।

1) C पुरो - - - - - कटो कृता A °भृंकुटी E °भृंकुटिः 2) A चटुल-वचनैर्गा° C कुटिलवचनैर्गा° D चटुल° D °हसत्प° E °हतात्प° D °चुंबित- 3) A °रलकवलनै° C °रलवननै E °रलकवकलतैर्वार 4) A °ललानं C °टृप्रः कामक्रोप. पु° E कांते कोप पु° 6) A सामदाने 7) A °विध्वंसो B °रशानिकृत् C शृंगा ननु E शृगारहेतवे 8) D om. षट् D परिकी° 9) AC सदुदाकृति° B °भिस्तथा 10) om. ABDE; C om. अथ 11) A थविनीतो D ऽथ 12) AE याप्यो 13) om. ADE; B अथ सामोदा° 14) C मानिनि 15) A तद्दोषस्सफलो मृगाक्षि E नो दोषः

इत्थं जल्पति वल्लभे मृगदृशा चतुर्दलं संवृतं
रक्तावं विरलीकृतं च वदने दत्तं च किं चिह्वचः ॥६५॥

॥ अथ दानम् ॥

अलंकारादिकं दद्यान्नायको यत्र तुष्टये ।
उद्दिश्य कारणं किं चिद्दानं तत्स्याच्च तद्यथा ॥ ६६ ॥

॥ तथोदाहरणम् ॥

प्रणयिना निजहारलतां स्वयं किल तवेति निवेश्य कु-
चस्थले ।
पुलकभाजि पुरा कुपिताप्यसौ कृतकचग्रहणं परिचुम्बिता
॥ ६७ ॥

॥ अथ भेदः ॥

यस्मिन्परिजने तस्याः समावर्ज्य प्रसादितम् ।
तेनैव लभते कान्तां कान्तो भेदः स उच्यते ॥ ६८ ॥

॥ तदुदाहरणम् ॥

धुन्वाना करपल्लवं विदधती दृष्टिं रुषा रागिणीं
तन्वाना वचनानि निठुरतरं मागाः शठेत्थं मुहुः ।

[1]) A संलात् B °र्दुदलैः C °र्नलै. E चतुर्नलतसृतो C संरुज [2]) B व्यूरतं D विमली° B °कृतं न वचने om. च before किं [3]) om. cdd. [4]) D दत्वा ना° [5]) B उद्देश्य E चिद्दूदानं लब्धागत यथा [6]) om. ACDE [7]) BCD °लता BE नवेति C तवेति B कुचद्वये [8]) From भाति to दृत्वं 3, 6 lost in A [9]) om. CDE; B ॥ भेदलक्षण ॥ [10]) C °झन E °र्जं C प्रसादने. [11]) C दहते BE कांत [12]) om. CDE [13]) B रागिणां C रागिनी D नागिनि [14]) B तन्वना B निष्ठर° CDE निठुर° B मागा शठोत्थ

दूरादागतभीतिमत्यभिमते स्वैरं स्वसंज्ञाकृता
पूर्वावर्जितया चकोरनयना सख्यैव संबोधिता ॥ ६९ ॥

॥ अथोपेक्षा ॥

प्रसादनविधिं त्यक्त्वा वाक्यैरन्यार्थसूचकैः ।
यस्मिन्प्रसाद्यते योषिदुपेक्षा सा मता यथा ॥ ७० ॥

॥ तथोदाहरणम् ॥

एतत्किं ननु कर्णभूषणमयं हारः सुकाञ्ची नवा
बद्धा का चिदियं त्वयाद्य तिलकः श्लाघ्यः प्रिये कल्पितः ।
प्रत्यङ्गं स्पृशतेति तत्क्षणभवद्रोमाञ्चमालाञ्चिता
तन्वी मानमुपेक्षयैव शनकैर्धूर्तेन संमोचिता ॥ ७१ ॥

॥ अथ प्रणतिः ॥

केवलं दैन्यमालम्ब्य पादपातो नतिर्मता ।
अभीष्टा सा भृशं स्त्रीणां ललिता च भवेद्यथा ॥ ७२ ॥

॥ तथोदाहरणम् ॥

कुङ्कुमार्द्रकुचकुम्भबिम्बितं वीक्ष्य पृष्ठमितराङ्गनाश्रयम् ।

[1]) D °दायत° E °दायति° C °मते दृष्टे [3]) *om.* CDE [4]) B प्रसादविधिं D प्रसाधन° CE °विधि D त्यक्त्वा वाक्यैरर्थ्य° [5]) E यत्र प्रसा° [6]) *om.* CDE [7]) E एतत्कि तव कर्ण° D हारस्तु कांचोलता [8]) D चिद्दयं [9]) D °मांचमालंचिता [10]) B °पेक्षयैव C संमोहिता [11]) *om.* E; CD *om.* अथ [12]) D *om.* केवलं B पादपातेन निर्मिता C °पातो [13]) C अभिष्टा E अभीष्ट सो मता D ललित C सा भ° E ललिता ज्ञायते यथा [14]) *om.* CDE [15]) C °कुंभिलबितं D °कुंभलिंगितं CDE पृष्टमपरा° B °रांगणाश्रयं C °रांगनागत

शंसदूनरसमाशु सा मुदं प्राप पादपतितस्य कामिनः ॥७३॥

॥ अथ प्रसङ्गविभ्रंशः ॥

अकस्माज्जायते यत्र भयकर्षादिभावना ।
सोऽयं प्रसङ्गविभ्रंशः कोपभ्रंशात्मको यथा ॥ ७४ ॥

॥ तथोदाहरणम् ॥

कथं ममोरसि कृतपक्षनिःस्वनः
शिलीमुखोऽपतदिति जल्पति प्रिये ।
निवृत्य किं किमिति ब्रुवाणयानया
ससाध्वसं कुपितममोचि कान्तया ॥ ७५ ॥

यथोत्तरं बलीयांस इत्युपायाः प्रसादने ।
आद्याश्चयो घनं कार्या विदग्धैः पश्चिमाः क्व चित् ॥७६॥

नातिखेदयितव्योऽयं प्रियः प्रमदया क्व चित् ।
मानश्च विरलः कार्यः प्रणामोत्सवलब्धये ॥ ७७ ॥

इत्युपायान्प्रयुञ्जीत नायिकापि प्रियं प्रति ।
क्रुद्धं नोपेक्षते किं चित्तत्रान्यत्कारणं भवेत् ॥ ७८ ॥

[1]) B सशदून° C शंसदून° D संसरद्घनरसाशुना मुदं E संसभृतरस° B *om.* प्राप [2]) *om.* DE; B *om.* प्र [3]) D °स्मायायते C *om.* भय D °भावनो [4]) C °भ्रंशात्मतो [5]) *om.* CDE; B ॥ अथ प्रसंगविभ्रंशोदाहरणा ॥ [6]) C °निरखन E °निस्वनं [7]) E ऽखलमदिति [8]) E त्रिवृत्य C त्रिमेतदि DE किमिदमिति C बुवाणाया D बुवाणाया E बुवाणाना [9]) C माधस [10]) D बलीयान्स इत्युपाय· [11]) CD °श्चय. सदा BE पश्चिमा D पश्चिम [13]) D *om.* मान D प्रणामोत्स° CD °लिब्धये [14]) E नायका° [15]) B क्रुद्धा E क्रुन्द्धानेक्षते C किं तु तत्रन्य° D किं तु तत्रान्य°

स्नेहं विना भयं न स्यान्मन्मथो नेर्ष्यया विना ।
तस्मान्मानप्रकारोऽयं द्वयोः प्रीतिप्रवर्धनः ॥ ७९ ॥

प्रियसुभगनाथवल्लभरुचिरस्वामीशकान्तचन्द्रमुखाः ।
दयितमनोरमरमणीजीविता इत्यादि नाम स्यात् ॥ ८० ॥

प्रीतौ भर्तरि सुदृशामप्रीतौ पुनरमूनि शठधृष्टौ ।
निर्लज्जदुराचारौ निठुरदुःशीलनामानि ॥ ८१ ॥

गर्वाद्व्यसनात्त्यागाद्विप्रियकरणाच्च निठुराद्वचनात् ।
लोभादतिप्रवासात्स्त्रीणां द्वेष्यः प्रियो भवति ॥ ८२ ॥

॥ अथ प्रवासः ॥

परदेशं व्रजेद्यत्र कुतश्चित्कारणात्प्रियः ।
स प्रवास इति ख्यातः कष्टावस्थो द्वयोरपि ॥ ८३ ॥

॥ तस्योदाहरणम् ॥

दृष्टं केतकधूलिधूसरमिदं व्योम क्रमाद्वीक्षिताः
कान्ताश्च शिलीन्ध्रकन्दलभृतः सोढाः कदम्बानिलाः ।
सख्यः संवृणुताश्रु मुञ्चत भयं कस्मान्मुधैवाकुला

[1]) B स्यान्मनो [2]) B प्रति° C प्रीतिप्रिय° E प्रीतिविंत्र° [3]) CE °सुभ-गरुचिरवल्लभनाथस्वामी° D °सुभगरुचिरुचिरवल्लभस्वामिनीत° [4]) D °मनोहर° CE °रमणी° edd. °जीवित [5]) E पुनरिमानि नामानि B °धृष्टः E °दृष्टौ [6]) E दुर्वृत्तो निठुरदुःशीलधामादि (sic, all) CD निठुर° [7]) B °दाचनाया° CD निठु° C °राच वच° E °रालापात [9]) om. CDE [10]) C कुतश्चित्कि D गतो यत्र [12]) om. DE; C तदुदा° [13]) D कष्टं के° B केतन° DE केतकि° C क्रमादितिर्ण D °क्षितं E °होरगतो [14]) B कान्तागता CE कन्तागता [15]) C सख्यो. D संवृणुताश्रु C °ताश्रु B मधव श्रं C मुंच

एतानप्यधुनातिवज्रघटिता नूनं सहिष्ये घनान् ॥ ८४ ॥

॥ अथ देशान्तरकामुकस्यावस्थावर्णनरूपम् ॥

कामं कर्णकटुः कृतो ऽतिमधुरः केकारवः केकिनां
मेघाश्चामृतधारिणो ऽपि विहिताः प्रायो विषस्यन्दिनः ।
उन्मीलन्नवकन्दलावलिरसौ शय्यापि सर्पायते
तत्किं यद्विपरीतमत्र न कृतं तस्या वियोगेन मे ॥ ८५ ॥

कार्श्यजागरमालिन्यचिन्ता वै तत्र जायते ।
अवस्था विविधा स्त्रीणां मृत्युः स्याद्वधिः परम् ॥ ८६ ॥

॥ अथ देशान्तरगतनायकस्य नायिकामुद्दिश्य कामं प्रति सखीसोपालम्भवाक्यम् ॥

अद्यैव यत्प्रतिपदुद्गतचन्द्रलेखा-
सख्यं त्वया तनुरियं गमिता वराक्याः ।
काले गते कुसुमसायक तत्प्रभाते
बाणावलीं कथय कुत्र विमोक्ष्यसि त्वम् ॥ ८७ ॥

॥ अथ देशान्तरगतनायकनायिकास्वरूपनिरूपणम् ॥

1) D °धुनापि वज्र° C °प्ये धुना 2) *om.* CDE 3) B करोति मधुरः DE कृतो पि म° B केकिनो 4) C °मृतद्राविनो D °मृतद्राविनो E °मृतवर्षिणो B प्रायेण D विरं स्य° 5) D °वनिर° CD °नौ सहाय्यगकायते E नर्म्यो च य शिख्यायते 6) C *om.* यद् E च्छिद्रिप° D °तनय C कृते C °गेन किं 7) C कार्श्य° B °मालिन्यं DE °चिंताया D यत्र 8) C मृत्यु. देवो: DE मृत्युश्चद्वधे. (E °धि.) E पुरः 9) *om.* CDE 10) C °रेखा 11) D वराक्या 12) B °साधक E नु प्रभाते 13) B *om.* बाणा° E °लिं BD विमोक्षसि 14) *om.* DE; BC *om.* अथ B *om.* गत B °नायकोना° C °नायकास्व° (*om.* नायिका) C °स्वरूपणं

निःश्वासैः सह सांप्रतं सखि गता वृद्धिं ध्रुवं रात्रयः
सार्धं लोचनवारिणा विगलितं तत्प्रवाणात्कङ्कणम् ।
प्राणाशा तनुतामुपैति च मुहुर्नूनं तनुस्पर्धया
कन्दर्पः परमेक एव विजयी याते ऽपि कान्ते स्थितः ॥ ८८ ॥
नीरागो ऽधरपल्लवो ऽतिमलिना वेणी दृशौ नाञ्जिते
व्यालम्बालकमालिका धवलतामालम्बते ऽङ्गच्छविः ।
इत्थं सुभ्रु विसंष्ठुलापि विरहव्यापद्विमर्दादियं
सख्येव स्थिरशोभया दृढतरं प्रत्यङ्गमालिङ्ग्यते ॥ ८९ ॥
किं तत्र नास्ति रजनी किं वा चन्द्रो न तत्र सौधरुचिः ।
येन सखि वल्लभामपि न स्मरति स मां विदेशरुचिः ॥ ९० ॥
प्रसर शिशिरामोदप्लोदं समीर समीरय
प्रकटय शशिन्नाशाः कामं मनोभव जृम्भ्यताम् ।
अवधिदिवसः पूर्णः सख्यो विमुञ्चत तत्कथां
हृदयमधुना किं चित्कर्तुं ममान्यदिहेच्छति ॥ ९१ ॥
इत्यादिविरहावस्थाः पुंसो ऽपि हि भवन्ति ताः ।

[1]) BCE निश्वा° D *om.* ध्रुवं E परां रा° [2]) D °वारिणैव गलितं B यत्प्राकृत कंकणं C तत्प्राकृते कंकणैः D तत्प्राकृताणत्ककणैः E तत्प्राकृतं मे सुत्तं [3]) C मुहुरप° D न तु स्प° [4]) B ज्ञाते D यातो E स्याने र्यकांतस्थितः C स्थिति. [5]) B °ल्लवे [6]) D व्यालंब्यालक° B °च्छविं D °च्छवि [7]) E सुभ्रुवि° B वि-संस्थलापि CD °ष्टु° D विसस्थलापि E °व्यापारम° [8]) *cdd.* सख्येव C °शोभया E °शोचया B °लिंगते E °लंगिता [9]) D रजनी B चंद्रो न किं त्वसाजरुचि. E न किं र यो ध्यरुचि. [10]) B *om.* न [11]) B °द्दोदं CDE °मोदं C कोदं D सोदं E कोदं E समर B समीरयः [12]) CD जृंभतां [14]) B °दिहेच्छे

कन्दर्पशरघाताच्चा मा भूवन्वैरिणामपि ॥ ९२ ॥

॥ अथ करुणात्मकः ॥

यत्रैकस्मिन्मृते ऽप्यन्यो मृतकल्पो ऽथ तद्गतः ।
नायकः प्रलपेत्प्रेम्णा करुणो ऽसौ स्मृतो यथा ॥ ९३ ॥

॥ तदुदाहरणम् ॥

दग्धा स्निग्धवधूविलासकदली वीणा समुन्मूलिता
पीता पञ्चमकाकली कवलिता शीतद्युतेः कौमुदी ।
लुष्टः स्पष्टमनेकरत्ननिचयो नाहं रतिः केवलं
कन्दर्प दहता हरेण भुवनं निःसारमेतत्कृतम् ॥ ९४ ॥

॥ अथ पुरुषप्रलापोदाहरणम् ॥

वक्त्रं चन्द्रमसा दृशौ मृगगणैः केशाः कलापिव्रजै-
र्मातङ्गैः स्तनमण्डलं भुजलतोल्लासश्चलत्पल्लवैः ।
सौगन्ध्यं मलयानिलेन वलिना तन्वी विभज्येति सा
सर्वैर्निष्करुणैर्हृताहृतमहो दैवेन किं चिन्न मे ॥ ९५ ॥

इयतीं सुभगावस्थां गतो ऽसि यस्याः कृते स्मरातङ्कात् ।

1) E °रिणोरपि 2) *om.* DE; BC *om.* अथ 3) C °स्मिन्विनष्टेऽन्यो D °स्मिन्विनष्टे न्यो E यत्रैकस्मिन जिपन्ने ऽन्यो मृ° पि B तद्गता E तद्गतं 4) B नायिका BDE °प्रेम्णा B मृतो E मतो 5) *om.* CDE 6) C °वधू° CE समुन्मीलिता 8) B लुष्ट E लुटा E °रत्नरिपणा 9) CE हरता 10) *om.* DE; C *om.* अथ 12) D °लतायासश्च° CE °ल्लासो लतामंडपैः 13) D °लेन दयिता पत्नी वि° C °निले 14) BCD °र्नि:क° E °र्निष्क° B °हृता भुवनगते D *om.* हृता E °णौ हृता भुवनगतो ते येन दैवेन मे 15) C इयंतो C *om.* ऽसि B यस्या C वस्याः D स्मरतां

मूर्छां हरामि सा तव गतपुण्या नयनसलिलेन ॥ ९६ ॥

पाशो विपाशित इवाहित एव सान्द्रः
कर्पूररेणुरुपगूढमुरो नताङ्गि ।
पापेन येन गमितासि दशाममुष्यां
मूर्छाविरामललितं मयि धेहि चक्षुः ॥ ९७ ॥

ग्लानो मुक्ताश्रुरुद्विग्नः स्रस्ताङ्गो नष्टचेतनः ।
सचिन्तो दैन्यभागस्मिन्नेवंप्रायो जनो भवेत् ॥ ९८ ॥

केषांचित्करुणाभ्रान्तिः कारुण्यादिह जायते ।
एतस्य मिथुनावस्थां विस्मृत्य रतिमूलजाम् ॥ ९९ ॥

स्त्रीपुंसोश्च भवेदेव सापेक्षः संगमः पुनः ।
शृङ्गारवचनप्रायः करुणः स्यात्स चान्यथा ॥ १०० ॥

तस्माच्छृङ्गार एवायं करुणेनानुमोदितः ।
सौन्दर्यं सुतरां धत्ते निबद्धो विरलं बुधैः ॥ १०१ ॥

॥ अथ स्त्रीणां साचोतनः ॥

1) B हरति B तगपु° C गतगत° 2) B पाशो विपाशित CD उपासित BD सांद्र- 3) E °गूढतरो C नतांगि D नतांगो 4) B केन D *om.* येन CE गमितेति D दृशा° C °ममुष्मिन् E °ममुष्मिन 6) E ग्लानो C मुक्तासुरु° D °द्विग्न. 7) C °भाग्य° D °भाग्यो स्मि° 8) B °द्दिए E °द्दिद 9) D एतच C विसृत्य B मति° CD रतिभाजजा 10) CE स्त्रीपुंसयोर्भ° D °द्देपः CD सापेक्षे CE संगमे D संगमो 11) E °वचने प्राय. D करुणा C स्यान्न चा° D स्यात्सतां यथा 12) BE तस्मात् शृं° D तस्मा शृं° D नामयं C करुणो नानु° 14) *om.* DE; BC *om.* अथ

कारुर्दासी नटी धात्री प्रतिवेश्याथ शिल्पिनी ।
बाला प्रव्रजिता चेति स्त्रीणां ज्ञेयः सखीजनः ॥ १०२ ॥

कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः ।
माधुर्यं नर्मविज्ञानं वाग्मिता चेति तद्गुणाः ॥ १०३ ॥

विनोदो मण्डनं शिक्षोपालम्भोऽथ प्रसादनम् ।
संगमो विरहाश्वासः सखीकर्मेति तद्यथा ॥ १०४ ॥

॥ तदुदाहरणम् ॥

मया कोऽयं मुग्धे कथय लिखितः सवरसखी-
वचः श्रुत्वेत्युच्चैर्विनिहितदृशा चित्रफलके ।
न वक्तुं तन्वंग्या शकितमथ वोद्दामविदल-
त्कदम्बाकारेण प्रिय इति ममाख्यायि वपुषा ॥ १०५ ॥

प्रत्यङ्गं प्रतिकर्म नर्मपरया कृत्वाधिरूढस्मरा-
दौत्सुक्यं प्रविलोक्य मोहनविधौ चातुर्यमस्याः पुनः ।
सख्या यावकमण्डनं न रचितं पादे कुरङ्गीदृशः
सस्मेरं विशदच्छदे च शयने दृष्टिः समारोपिता ॥ १०६ ॥

नीरन्ध्रं परिरभ्यते प्रियतमो भूयस्तरां चुम्ब्यते ।

1) BE कारुदासी B नटी C °वेश्याथ E °वेश्या च 2) C स्त्रीणां प्रेष्यजना स्मृता. D ज्ञेया सखीजना 4) B माधुर्यनर्म° B वाङ्मिता 5) D विनोदं B मड्नं D प्रसाधन 6) C सखीकर्मेति 7) om. CE 8) D मये BCD कोऽयं मुग्धे 10) C शकितमथ किं तु विदलत्क° D शकितमथ वा चाहविदला- B °विलस- 12) B कृत्वाभिरूढस्म° DE कृत्वा निरूढस्मरा- 13) E °दौत्सुक्य E चातुर्य- मालोक्य च 14) B यावमंडनं C न चितं

तद्वाढं क्रियते यदस्य रुचिरं चाटूच्चकैस्तन्यते ।
सख्या मुग्धवधूरियं रतिविधौ यत्नेन संशिक्षिता
विज्ञातं गुरुणा पुनः शतगुणं पुष्येषुणा कारिता ॥१०७॥

सुभग भवता कृत्ये तस्या ज्वलत्स्मरपावके
ऽप्यभिनिवसता प्रेमाधिक्यं चिरात्प्रकटीकृतम् ।
तव तु हृदये शीतेऽप्येवं सदैव सुखास्तये
मम सहचरी सा निःस्नेहा मनागपि न स्थिता ॥१०८॥

कोपं विमुञ्च कुरु नाथ वचो मदीय-
माश्वासय स्मरकृशानुकृशां कृशाङ्गीम् ।
एकाकिनी कठिनतारकनाथकान्त्या
पञ्चत्वमाशु ननु यास्यति सा वराकी ॥१०९॥

अमुं दधे ऽशुकमहमत्र पादपे
युवामलं निभृतमिहैव तिष्ठतम् ।
रहःस्थयोरिदमभिधाय कामिनोः
पुरो ययौ निपुणसखी लतान्तरम् ॥११०॥

[1]) BCD तद्वाढं E तद्वाढं D चाटुत्वमातन्यते E चाटूच्चकैः चाटू सूच्यते गूश्च-कैस्तान्यते [2]) E रतविधौ [3]) E निर्भ्रान्तगुरुणा C विज्ञात. D विज्ञातः C करुणा D करुणा [4]) B तस्यां D तस्य [5]) D °निविशिता E °निविशता D रागाधिक्यं [6]) E नु C सीते [7]) D निर्गूढा [8]) BE मदीयं [9]) B मा वासय C °स्वा° E °त्वचा कृ° C कृशांगी [10]) CE °तारकरा त्व° D °तारकायकांत्यां [11]) B यास्यसि E व्यास्यति [12]) C याह B दधे CDE दधे शुक° E शुकमिह पत्रपादपे C °हमत्र पादपे D adds: युवामत्र पादपे [13]) C युवामहं BC तिष्ठतां D तिष्ठतां E तिष्ठतं [14]) BDE रहस्य° C रहस्तयो° B *om.* from मभिधाय to p. 68, l. 1 युवे° [15]) E लतांतरे

स्फुरति यदिदमुच्चैर्लोचनं तन्वि वामं
स्तनतटमपिधत्ते चारुरोमाञ्चमाला ।
कलयति च यदन्तःकम्पतामूरुकाण्डं
ननु वदति तदद्य प्रेयसा संगमं ते ॥ १११ ॥

इत्यादि विविधं सख्यो व्यापारं कुर्वते सदा ।
योषितामत्र सर्वस्वनिधानकलशोपमाः ॥ ११२ ॥

इत्थं विरचनीयोऽयं शृङ्गारः कविभिः सदा ।
अनेन रहितं काव्यं प्रायो नीरसमुच्यते ॥ ११३ ॥

तव नाथानुरागोऽयं मद्विधैः कथमुच्यते ।
येनैकापि प्रिया नीता पञ्चत्वं पुण्यकारिणा ॥ ११४ ॥

इत्थं विचार्य प्रचुरप्रयोगान्योऽमुं निबध्नाति रसं रसज्ञः ।
तत्काव्यमारोप्य पदं विदग्धवक्त्रेषु विश्वं परिबम्भ्रमीति ॥ ११५ ॥

॥ इति श्रीरुद्रभट्टविरचिते शृङ्गारतिलकाभिधाने काव्यालंकारे विप्रलम्भशृङ्गारो नाम द्वितीयः परिच्छेदः ॥

[1]) E स्फुरति B °मुग्धकैर्लोचनं [2]) C स्तनयुगम° E °मपिदध्ने *cdd.* °मालां [3]) B च यदुगत. कर° C च यदंत कल्प° D च यदत.रुं° E चलंदन कं° [4]) C यदद्य B संगमे प [5]) E इत्य च त्रि° C त्रित्रि स° B °ते ते सदा D adds ११ In C the order is 1. 5. 6. 9. 10. 7. 8. 11. 12. [7]) E °नीयो गौ [8]) E *om.* stanza 114 [10]) C येनैकेन प्रिया नित्यं [11]) B पचुरं [12]) C °व्य पदार्थ° [13]) B *om.* भट्ट; C °भट° E श्रीभट्टरुद्र° C puts का° before रु° BCE °तिलके (*om.* अभिधाने) D काव्यमाले° [14]) CE *om.* विप्र° नाम B °शृगारे द्वि° C adds: ॥२॥

विकृताङ्गवचश्चेष्टावेषेभ्यो जायते रसः ।
हास्योऽयं हासमूलत्वात्पात्रत्रयगतो यथा ॥ १ ॥

॥ अथोत्तमलक्षणम् ॥

किं चिद्विकसितैर्गण्डैः किं चिद्विस्फारितेक्षणैः ।
किं चिल्लक्ष्यद्विजैः सोऽयमुत्तमानां भवेद्यथा ॥ २ ॥

॥ तस्योदाहरणम् ॥

पाणौ कङ्कणमुत्फणः फणिपतिर्नेत्रं ज्वलत्पावकं
कण्ठः कुण्ठितकालकूटकुटिलो वस्त्रं गजेन्द्राजिनम् ।
गौरीलोचनलोभनाय सुभगो वेषो वरस्येति मे
गण्डोल्लासविभावितः पशुपतेर्हासोद्गमः पातु वः ॥ ३ ॥

॥ अथ मध्यमनीचहासलक्षणम् ॥

मध्यमानां भवत्येष विवृताननपङ्कजः ।
नीचानां निपतद्बाष्पः श्रूयमाणध्वनिर्यथा ॥ ४ ॥

[1]) CDE °वच.कृत्य° [2]) D हासो E हास्योपहासमूलात्मा पा° BCD हास्य° C °त्रयागतो. B adds: हासस्त्रिविधः । उत्तमो मध्यमो नीच. ॥ [3]) *om.* CDE [4]) B °द्विकृतै° C °द्रूद्विकासितै° D °द्विकाशितै° BE °क्षणः [5]) B चिल्लसद्विजैः C चिद्रूद्विजैः E °द्विज· C स्मृतो यथा [6]) *om.* CDE [7]) B °नेत्रि D °नेत्रं ज्वलत्पा° B °वकः [8]) E कुट्टित° [10]) BD °र्गेर्हास्यो° [11]) *om.* DE; BC *om.* अथ B मध्यनीच° C °नीचच° B °हास्य° [12]) BD विकृता° B °पंकजं [13]) B त्रिपताद्बा° C °द्रूदाष्पश्रू° E निपतेद्‌ बा° B श्रूयमाणो ध्व° D °मान°

॥ अथ मध्यहासोदाहरणम् ॥

मुग्धे त्वं सुभगे न वेत्सि मदनव्यापारमद्यापि तं
नूनं तेऽब्जदलैपिणायमलिना दृष्टो न भर्त्राधरः ।
सख्यैवं हसितं वधूं प्रति सदा सानन्दमाविर्भव-
दन्तान्तर्गतसीधुवासरसिकैर्भृङ्गैर्यथा धावितम् ॥५॥

॥ अथ नीचहासोदाहरणम् ॥

त्यक्ता गुञ्जफलानि मौक्तिकमयी भूषा स्तनेष्वाहिता
स्त्रीणां कष्टमिदं कृतं सरसिजं कर्णे न बर्हिच्छदः ।
इत्थं नाथ तवारिधाम्नि शबरैरालोक्य चित्रस्थितिं
बाष्पार्द्रीकृतलोचनैः स्फुटरवं दारैः समं हस्यते ॥६॥

॥ अथ हास्यरसानुभावः ॥

अस्मिन्सखिकराघातनेत्रोल्लासाङ्गवर्तनम् ।
नासाकपोलविस्पन्दो मुखरागश्च जायते ॥७॥

॥ अथ करुणः ॥

[1]) *om.* DE; BC *om.* अथ B तयोदा° [2]) E मुग्धा C *om.* न B तन् CE यन् [3]) C ते कमलं पिषा° D ते ञलञेठिना° E नूनं । तञलञैपिणायमलिना D दृष्टो C *om.* न [4]) B सख्येवं E सख्यत्वं CDE प्रति सदा सा° [5]) C °दन्तान्तर्वन° E °दन्तान्तर्वनसीधुगंध° [6]) *om.* DE; BC *om.* अथ B नोचलक्षणं [7]) C त्यक्ता DE त्यक्त्वा B *om.* भूषा C शोभा [8]) With णां in स्त्रीणां A recommences. A वर्ह° BD वर्हि° CDE °च्छदं [9]) A नाम ABDE शबरै° C शबरैरा° DE °ति [10]) A वा° B वार्पा° C वार्पधो° D वार्पाधो° B स्फुरतर् B हास्यते [11]) *om.* ABDE [12]) BCD तस्मिन्सा° D °सखी° [13]) B °निस्पंदो D विस्पंदो E विस्पंदो [14]) *om.* ADE; B अथ करुणरसविभावोक्त्याविभाव.

शोकात्मा करुणो ज्ञेयः प्रियभृत्यधनक्षयात् ।
तत्रस्थो नायको दैवहतः स्याद्दुःखभाजनम् ॥ ८ ॥

भर्ता संगर एव मृत्युवसतिं प्राप्तः समं बन्धुभिः
प्रौढानामनिशं दुनोति च मनो वैधव्यलाभाद्वधूः ।
बालो दुस्त्यज एक एव च शिशुः कष्टं कृतं वेधसा
जीवामीति महीपते प्रलपति त्वद्वैरिसीमन्तिनी ॥ ९ ॥

॥ अथ करुणानुभावः ॥

भूपातो दैवनिन्दा च रोदनं दीननिःस्वनः ।
शरीरताडनं मोहो वैवर्ण्यं चात्र जायते ॥ १० ॥

॥ अथ रौद्रः ॥

क्रोधात्मको भवेद्रौद्रः प्रतिशत्रूनमर्षणः ।
रक्षःप्रायो भवेद्यत्र नायको ऽत्युग्रविग्रहः ॥ ११ ॥

यैः प्राणापहृतिः कृता मम पितुः क्षुद्रैर्युधि क्षत्रियै

[1]) C °मृत्यर्धिन° E °मृत्योर्द्धन° [2]) AC तत्रेत्य B यत्रेत्यं E तत्रस्य C देव° BC °हत [3]) A भर्त्ता A °वसति. प्राप्ता D मृत्युपंत्री प्राप्तः A बन्धुभिर् E बांधवैर् [4]) A यूनां क्षाणमिय E दानाकाममिय A धुनोति E °व्यभावाद° [5]) B एक एव च A वेदसा [6]) C विलति A तद्वैरि° [7]) *om.* ADE; B करुणा तथानुभावः D अथ करुणो रसानुभावकथनं [8]) A भूपतो C °पतो देवनंदा A °नं चैव निस्स्वनः B °निस्वनं C °निस्वन. D °निश्वसं E °निश्वतः [9]) A चैव [10]) *om.* ADE; B ॥ रौद्रभावं ॥ [11]) C °शूत्रान° D °शत्रन° B °मर्षितः In A मर्षणा. रक्ष is broken off [12]) D भवत्यत्र E भवेत्तत्र नायको त्युग्र° [13]) Aप्राणा° B प्राणापहृतिः D मयि गुरोः क्षु° From ति. to तु. broken off in A. C क्षुद्रैः कृते क्ष° E °र्युधा क्षये B °ये.

रामोऽहं रमणीर्विहाय बलवन्निःशेषमेषां हठात् ।
भास्वत्प्रौढकुठारकोटिघटनाकाण्डत्रुटत्कंधरा-
स्रोतोऽन्तःस्रुतविस्रशोणितभरैः कुर्यां क्रुधो निर्वृतिम् ॥१२॥

॥ अथ रौद्रानुभावः ॥

मुखरागायुधक्षेपस्वेदकम्पाधरग्रहाः ।
शक्तिशंसा कराघातो भृकुटिश्चात्र जायते ॥१३॥

॥ अथ वीररस. ॥

उत्साहात्मा भवेद्वीरो दयादानादिपूर्वकः ।
त्रिविधो नायकस्तत्र जायते सत्त्वसंयुतः ॥१४॥

गाम्भीर्यौदार्यसौन्दर्यशौर्यधैर्यादिभूषितः ।
आवर्जितजनो जन्ये निर्व्यूढप्रौढविक्रमः ॥१५॥

॥ अथोत्तमवीरः ॥

अयि विहंग वराककपोतकं विसृज धेहि धृतिं मम मेदसा ।
शिविरहं भवता विदितो न किं सकलसत्त्वसमुद्धरणक्षमः
॥१६॥

[1]) B रमणोः D रमतेणोर्वि° B बलवन्निःशंकमेषां D बलवन्निःशेषमेव A °निःशेषमेका E बलवाननि·° [2]) D तेषां मो° A °गहना° [3]) A स्रोतान्त° BDE श्रो° BD °श्रुत° E °श्रुति° BD °त्रिश्र° C °त्रिस्र° C क्रुधां [4]) om. ADE; B om. अथ [5]) B °रागोद्युधाक्षेपः A °धात्ते° E °धो° C °वं° D °क्रयो° AD °ग्रहः [6]) B शक्तिः शगांक° A भ्रुकुटी चात्र [7]) om. ABDE [8]) A दयादानाति° CE °नाज्ञिपू° [9]) C त्रित्रिधो [10]) C °र्यशूरत्वर्यधैर्या° E °र्यशोर्डीर्यधर्यधै° A °पिताः [11]) ACD °जनो यात (D या°) E जन्यनित्याढविक्रम. C निव्यू° D °ढः प्रौढ वि° [12]) om. ADE; BC om. अथ [13]) ABD विवि°

॥ अथ मध्यमवीरः ॥

मुषितो ऽसि करे नूनं भुवनत्रयमात्रलब्धितोषेण ।
बलिरर्थितदो ऽस्मि यतो न याचितः किं चिदप्यधिकम् ॥१७॥

॥ अथाधमवीरः ॥

मत्तैरावणतीव्रदन्तमुसलैरैरण्डकाण्डायितं
वज्रेणापि विकीर्णवह्निततिना मार्णालनालायितम् ।
मद्दत्तस्यवलम्ब्य किं चिदधुना तद्विस्मृतं वज्रिणा
युद्धं यध्यवलम्बते स तु पुनः सज्जो ऽस्म्यहं रावणः ॥१८॥

॥ अथ वीररसानुभावः ॥

धृतिगर्वौद्धत्यमतिस्मृतिरोमाञ्चा भवन्ति चामुष्मिन् ।
विविधा वाक्याक्षेपाः सोत्साहामर्षवेगाश्च ॥१९॥

॥ अथ भयानकरसः ॥

[1]) *om.* ADE; BC *om.* अथ [2]) In D stanza 18 is placed before stanza 17. AD सुपितो B हरेर्नूनं C हरे यूत्वं A *om.* मात्र D °लब्ध° E °लध्ध° AB °तुष्टेन [3]) B बलिरर्थिदो corr. in margin to °र्थिदोदो (sic) C ब्रलिरर्थदो D ब्रलिरस्मि A नियतो C नियते D *om.* यतो न E तो न या° B याचित E याचितो हं नोदये किं B °दप्यधिकं C किं चिदपि ॥१७॥ E °दपाधिका [4]) *om.* ADE; B °वीरो यथा C ॥ अथ वीरः ॥ [5]) B यत्रैरावणदंतितंत° E यत्रैराजतदंततीव्र° C °रावत° A °मुसुलैरैरंड° BCD °मुशलैरे° E °रे° [6]) D °वह्निरुचिना A मार्तारनाला° [7]) E °ना ते हि स्मृतं C तद्विस्मितं In A वज्रिणा is torn off [8]) B °लंबते त्र स पुनः D स च [9]) *om* cdd. [10]) B धृतिगर्वैडित्यं स्मृ° In A धृतिगर्वौद्ध is torn off C °गर्वोद्धतिमति° D धृतिगर्वर्दमतिरोमाञ्चाः E °गर्वौन्नत्यमतिस्मृ° C भवति [11]) BE वाक्यक्षेपा. C वाक्यानोपा. From सोत्सा° to पङ्कजस्य stanza 54 lost in A. B adds: ॥ इति वीररसानुभाव. ॥ [12]) *om.* DE

भयानको भयस्थायिभावोऽसौ जायते रसः ।
शब्दादिविकृताद्वार्तं बालस्त्रीनीचनायकः ॥२०॥

॥ अथ बालभयानकोदाहरणम् ॥

श्रुत्वा तूर्यनिनादं द्वारे भयवलितललितवाकुलितः ।
धन्यस्य लगति कण्ठे मुग्धशिशुर्धूलिधूसरितः ॥२१॥

॥ अथ स्त्रीगतभयानकोदाहरणम् ॥

प्रणयकलहसङ्गान्मन्युभाजा निरस्तः
प्रकटितचटुकोटिः पादपद्मानतोऽपि ।
नवजलधरगर्जैर्भीतयासौ कया चित्
त्रुटिततरलहारं सस्वजे प्राणनाथः ॥२२॥

॥ अथ नीचगतभयानकोदाहरणम् ॥

कम्पोपरुद्धसर्वाङ्गैर्गलत्स्वेदोदबिन्दुभिः ।
त्वदारब्धैर्मल्लीनाथ वैरिभिर्वनितायितम् ॥२३॥

॥ अथ भयानकानुभावः ॥

[1]) B °स्थायी भा° [2]) B शब्दादेर्विकृ° E °विकृताद्योर्त्याल° BC °द्वार्त D °दूयार्त BDE बाल° D °स्त्रीणां च ना° [3]) *om.* DE; B बाल° C अल्प-नायको° [4]) B श्रुत्वा च तूर्यनिर्घोष D तुर्य° CE भयचलित° D भयचकितललित° E *om.* ललित BD °वाकु° [6]) *om.* DE; B °भयानकमाह ॥ C स्त्रीनायकोदा-हरण [10]) E °नाथ [11]) *om.* DE; C नीचनायकोदा° B °भयानकमाह [12]) B कोपोपहत B सर्वाङ्गैर्गल° C सर्वाङ्गैर्विगल° C °स्वेदबिंदु° BE °बिंदु° [13]) C त्वदारंभैर्° D भल्लीनैर्म° C °हीपाल E °हीनान्न C °र्वलिता° [14]) *om.* DE; B ॥ तथानुभावः ॥ C भयानु°

वैवर्ण्यमश्रु संत्रासो हस्तपादादिकम्पनम् ।
स्वेदास्यशोषदृक्क्लेपाः संभ्रमश्चात्र कीर्तितः ॥२४॥

॥ अथ बीभत्सरसः ॥

जुगुप्साप्रकृतिर्ज्ञेयो बीभत्सोऽहृद्यदर्शनात् ।
श्रवणात्कीर्तनाद्वापि पूत्यादिविषयो यथा ॥२५॥

॥ तथोदाहरणम् ॥

लुठत्कृमिकलेवरं स्रवदसृग्वसावासितं
विकीर्णशवसंततिप्रसरदुग्रगन्धान्वितम् ।
भ्रमत्प्रचुरपत्त्रिकं त्रिकविवर्तिनृत्यक्रिया-
प्रवीणगुणकौणपं परिवभौ परेताजिरम् ॥२६॥

॥ यथानुभावः ॥

नासाप्रच्छादनं वक्त्रकूणनं गात्रसंवृतिः ।
निष्ठीवनादि चात्र स्यादुद्वेगादुत्तमेष्वपि ॥२७॥

1) D वैवर्ण्यगद्गदत्रासा E वैवर्ण्य गद्गदत्रासो B संत्रासद° 2) C स्वेदः श्वासो य दृक्लेप मं° D स्वेदः श्वासो य दृकक्षेप. B °दिक्प्रेक्षा E °दिक्प्रेक्षाः E °श्च ज्ञायते 3) *om.* DE B बी° C भीत्स° 4) C बीभत्साय° BD वी° C हृद्यद° 5) B पूत्यादि° D प्रेतादि° E पूत्यादेर्वि° CDE °यथायथा 6) *om.* DE; C यथो° 7) D लुठत्क्रि° cdd. °कलेवर 8) B विकीर्ण° BE °शव° C °संतत° *From* स्रवंत° *to* गुण° *line* 10 *om.* D B °संतति B °संप्रदुर्न्दितं E °गधान्दितं 9) B °त्रिवृत्रिक्रांतिक्रिय D °त्रिवृत्तनृत्य° 10) C *om.* परि° B °भौ वृतो परे° C परेतिरं 11) *om.* DE; C तता नु° 12) C °प्रज्ञा° E °कुणान E °वपानं B °संहृतिः C °संवृत्ति· D °सवृतिः 13) CE निष्ठी° B स्यादुद्वेगो ज्ञायते रसः

॥ अथाद्भुतरसः ॥

विस्मयात्माद्भुतो ज्ञेयो रसो रसविचक्षणैः ।
मायेन्द्रजालदिव्यस्त्रीविपिनाद्युद्भवो यथा ॥ २८ ॥

॥ तथोदाहरणम् ॥

सत्यं कृता त्वया हंस वनितानामियं गतिः ।
भ्रमन्त्येतास्तथाप्येतदिन्द्रजालं तवाद्भुतम् ॥ २९ ॥

॥ अथानुभाव ॥

गद्गदः साधुवादश्च स्वेदः पुलकवेपथू ।
दृष्टेर्निश्चलतारत्वं विकाशश्चात्र जायते ॥ ३० ॥

॥ अथ शान्तरस ॥

सम्यग्ज्ञानोद्भवः शान्तः समत्वात्सर्वजन्तुषु ।
गतेच्छो नायकस्तत्र मोहरागपरिक्षयात् ॥ ३१ ॥

॥ तथोदाहरणम् ॥

धनमकृतकदत्तं स्वीयं यथार्थितमर्थिने
कृतमरिकुलं नाशेषं स्वखड्गविजृम्भितैः ।
प्रणयिनि जने रागोद्रिक्तो रतिर्विहिता चिरं

1) *om.* DE 3) B माहेंद्र° C महेंद्र° D °त्रिलोकनभवो यथा 4) *om.* cdd. 5) DE त्वया कृता 6) B °जालि C °जाल C तद्दुतं E तत्रे प्रिय 7) *om.* DE; B स्तोः स्° 8) B गद्गद D °छाद्. C द्वेद B °वेपथुः C °वेंग (sic) E °वेपथू 9) C त्रिकाश्चात्र 10) *om.* BDE 12) B गतेच्छा° CDE तमोराग° B °परिक्षयात् 13) *om.* DE; C यथो° 14) D यद्यर्पित° 15) E *om.* स्व 16) D °द्विता

किमपरमतः कर्तव्यं नस्तनावपि नादरः ॥ ३२ ॥

॥ अथानुभावः ॥

निरालम्बं मनो ऽन्यत्र वाङ्मात्मनि तिष्ठति ।
सुखे नेच्छा तथा दुःखे ऽप्युद्वेगो नात्र जायते ॥ ३३ ॥

अष्टाविति रसाः पूर्वं ये प्रोक्तास्तत्र निश्चितम् ।
प्रत्यनीकौ रसौ द्वौ द्वौ तत्संपर्कं विवर्जयेत् ॥ ३४ ॥

शृङ्गारबीभत्सरसौ तथा वीरभयानकौ ।
रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः ॥ ३५ ॥

हास्यो भवति शृङ्गारात्करुणो रौद्रकर्मतः ।
अद्भुतश्च तथा वीराद्बीभत्साच्च भयानकः ॥ ३६ ॥

यौ जन्यजनकावेतौ रसावुक्तौ मनीषिभिः ।
युक्तया कृतो ऽपि संभेदस्तयोर्वाढं न दुष्यति ॥ ३७ ॥

के चिद्रसविभागेषु भावाः पूर्वं प्रदर्शिताः ।
स्वातन्त्र्येणेह कीर्त्यन्ते रम्यास्ते कृतिनां मताः ॥ ३८ ॥

1) BE °रमित. 2) om. DE; B तथा° 3) E निरालम्बं CE यत्र D कुत्र BD वाङ° 4) E तत्रो CE दुःखे नोद्वेगस्तत्र D adds Sâhityadarpaṇam 241 (v. 3 °शोकभयो° v. 6 °भो ऽत्र निःसंकल्पं°) 5) C यष्टाविद E यत्रा- वति DE om. ये D प्रयुक्तास्तत्र E सर्वोक्ता° 6) C प्रत्यनीकरसौ B adds: ॥ यथ रसविरोधो द्वौ द्वौ ॥ 7) E रसौ शृंगारबीभत्सौ 8) C om. वैरिणौ 10) B यद्भुतस्तु E °भत्सात्र भयानकात 11) C रसाद्भुतौ D रसौ याक्तौ (sic) 12) B युक्तयुक्तो ऽपि D संदर्भि° B °स्तयोर्दोषं D °र्योषं B दुष्यतो 13) B °चित्र- सेषु D पूर्वं न दर्शिता 14) B °स्लेषेण C रसास्ते कवेः

रत्यादय इमे भावा रसाभिप्रायसूचकाः ।
पञ्चाशत्स्थायिसंचारिसात्त्विकास्तान्निबोधत ॥३९॥

शृङ्गारादिरसेष्वेव भावा रत्यादयः स्थिताः ।
प्रत्येकं स्थैर्यतोऽन्ये च त्रयस्त्रिंशच्चरा यथा ॥४०॥

प्रायोऽनवस्थिते चित्ते भावाः संकीर्णसंभवाः ।
बाहुल्येन निगद्यन्ते तथाप्येते यथा स्थिताः ॥४१॥

शङ्कासूया भयं ग्लानिर्व्याधिश्चिन्ता धृतिः स्मृतिः ।
औत्सुक्यं विस्मयो हर्षो व्रीडोन्मादो मदस्तथा ॥४२॥

विषादो जडता निद्रावहित्थं चापलं मतिः ।
इति भावाः प्रयोक्तव्याः शृङ्गारे व्यभिचारिणः ॥४३॥

श्रमश्चपलता निद्रा स्वप्नो ग्लानिस्तथैव च ।
शङ्कासूयावहित्थं च हास्ये भावा भवन्त्यमी ॥४४॥

दैन्यं चिन्ता तथा ग्लानिर्निर्वेदो जडता स्मृतिः ।
व्याधिश्च करुणे वाच्या भावा भावविशारदैः ॥४५॥

हर्षोऽसूया तथा गर्व उत्साहोऽमर्ष एव च ।

1) DE भाजा. E काव्यानि° 2) B °स्तन्निबोधत 3) D स्मृता. 4) D प्रत्येकं स्थायिनो 6) B adds: ॥ अथ भावनरसत्रियथोत्पत्तिमाह ॥ 7) E °चिश्चि-न्तजता धृति CD स्मृतिर्धृति. 8) D °न्मादो C रतिस्तथा 9) D विषादं C °वहित्या D °वहित्वा D धृति 12) D °सूयावहित्या 13) B °निर्वेदो CD धृति. E गृति (sic) 14) C °णे सेया D om. भाजा E भावविचक्षणी 15) D एर्षासूया तथा गर्वानु° CDE मद instead of ऽमर्ष

चापल्यमुग्रतावेगो रौद्रे भावाः प्रकीर्तिताः ॥ ४६ ॥
अमर्षः प्रतिबोधश्च वितर्कोऽथ मतिर्धृतिः ।
क्रोधोऽसूया श्रमो मोह आवेगो रोमहर्षणम् ॥ ४७ ॥
गर्वो मदस्तथोग्रत्वं भावा वीरे भवन्त्यमी ।
संत्रासो मरणं चैव वचनीयं भयानके ॥ ४८ ॥
अपस्मारो विषादश्च भयं रोगो मतिर्मदः ।
उन्मादश्चेति विज्ञेया भावा बीभत्ससंभवाः ॥ ४९ ॥
आवेगो जडता मोहो हर्षणं विस्मयो मतिः ।
इति भावान्निबध्नन्ति रसेऽस्मिन्नद्भुते बुधाः ॥ ५० ॥
एवं संचारिणो ज्ञेया भावाः प्रतिरसं स्थिताः ।
सात्त्विकास्तु भवन्त्येते सर्वे सर्वरसाश्रिताः ॥ ५१ ॥

॥ अथ चतस्रो वृत्तयः ॥

कैशिक्यारभटी चैव सात्वती भारती तथा ।
चतस्रो वृत्तयो ज्ञेया रसावस्थानसूचिकाः ॥ ५२ ॥

[1]) E चापोग्रमग्रतावेगो D °ग्रता चैव रौद्र C भावा भवन्त्यमी [2]) B अमर्ष E अमर्ष E प्रतिबोधश्च वितर्कश्च मति° C om. ऽथ [3]) B क्रोधासूये C सूया च गर्वः आवेगो D सूयाश्रु संमोह E ऽसूयाश्च गर्वः आवेगो °र्षणः D आवेगः रोमह° [5]) B वाचनीया [7]) D °संभवा. [8]) B जडा मोह C आवेगो मोहो विस्मयो हर्षणं स्मृति D विस्मयो हर्षणं धृति. E विस्मयः स्मृतिः [9]) D °न्निबध्नाति D बुधः [10]) B प्रतिरसे [11]) C °रसाश्रया. D °रसाश्रिताः E °रसान्विता. [12]) om. DE; C om. चतस्रो BC वृत्तय [13]) Stanza 52 is om. in DE; C कैशिकि° C तथैव [14]) BC °सूचकाः

॥ अथ कैशिकी ॥

या नृत्यगीतप्रमदोपभोगवेषाङ्गसंकीर्तनचारुबन्धा ।
माधुर्ययुक्ताल्पसमासरम्या वृत्तिः स्मृतासाविह कैशिकीति ॥५३॥

शृङ्गारहास्यकरुणारसातिशयसिद्धये ।
एषा वृत्तिः प्रयत्नेन प्रयोज्या विबुधैर्यथा ॥ ५४ ॥

सौन्दर्यं शशलाञ्छनस्य कविभिर्मिथ्यैव तद्वर्ण्यते
शोभेयं क्व नु पङ्कजस्य रजनीसंयोगभग्नत्विषः ।
इत्यालोच्य चिराय चारु रुचिरं त्र्यस्यत्कुरङ्गीदृशो
वीक्षेते नवयौवनोन्नतमुखौ मन्ये स्तनावाननम् ॥ ५५ ॥

हस्तेषुः कुसुमायुधस्य ललितं रागश्रियो लोचनं
सौभाग्यैकगृहं विलासनिकषो वैदग्ध्यसिद्धिध्वजः ।
साक्षीदं मधुबान्धवस्य निभृतं कस्यापि लीलानिधेः
कान्तास्तनबिम्बमण्डलं सखि नवं प्रच्छाद्यतां वाससा ॥५६॥

1) *om.* BDE; C °कोलच्चयां 2) C गीतनृत्यप्रम° C *om.* वेषाङ्ग E °देशांग° D °वंधा 3) CD वाणी E चाणी instead of वृत्तिः C स्मृता सा इ कौशि° 4) C °रसानां परिवृद्धये 5) C एषा वृत्ति. एषा प्र° E प्रायो वाच्या बुधैर्यथा 6) In C st. 56 is placed before st. 55. BC शशि° D सं-रायते 7) C सौभाग्यं कु E शाले दृष्टू कु With पङ्कजस्य A recommences ACD °संजोग° C °त्विषः D °त्विषा: 8) A रुचिरा C रुचिर E रुचिरम् CE त्र्यस्यन्मृगीचक्षुषो 9) A वीक्ष्येते B दृश्येते A नवयवनोन्नतमुखर्मन्ये तथा यौवनम् C नवयौवनोन्नता° E नवयौवनोन्नतमुखेसतायातत (sic!) 11) A सौभाग्यैनिकेतां परिलसद्वैदग्ध्यसिद्धिध्वजः E °निकषो C वैदग्ध° B °सिद्धिध्वज. 12) A लेला° C लिला° E °लानिधि 13) B कान्ता° ABCD °मण्डलं E स्तंधान्तविलगडलं A °च्छाद्यते

संमुच्छत्काञ्चनकुण्डलोज्ज्वला प्रभापि तापाय बभूव येऽ-
ज्वलम् ।
विलासिनीरम्यमुखाम्बुजन्मसु प्रजज्वलुस्तेष्वकृशाः कृशा-
नवः ॥ ५७ ॥

॥ अथारभटी ॥

या चित्रयुद्धभ्रमशस्त्रपातमायेन्द्रजालप्लुतिलङ्घिताद्या ।
ओजस्विवर्णाद्भुतदुर्विगाढा ज्ञेया बुधैः सारभटीति वृत्तिः॥५८॥
रौद्रे भयानके चैव बीभत्से च विचक्षणैः ।
काव्यशोभाकरी वृत्तिरियमित्थं प्रयुज्यते ॥५९॥
शस्त्रोद्दारितकुम्भिकुम्भविगलद्रक्ताक्तमुक्ताफल-
स्फारस्फूर्जितकान्तिकल्पितवृहच्चञ्चच्चतुष्कार्चितम् ।
क्रोधोद्दावितधीरधोरणिरणत्खड्गाग्रमुग्रायदं
युद्धं सिद्धवधूगृहीतसुभटं जातं तदा दुर्धरम् ॥ ६० ॥
नायं गर्जरवो गभीरपरुषं तूर्यं तदीयं विदं

[1]) A °काञ्चनकुण्डलोज्ज्वलप्रतापि BC °ज्ज्वलप्रभा° D °लोज्ज्वला प्रतापि E °ल-ज्ज्वलप्रतापि BD तापजनभूव C ताप प्रबभूव E प्रभूयावतान्ते D येऽज्वलं [2]) A om. कृशाः A कृशानवः [3]) om. ADE [4]) A चित्र° C °यद्ध° D °युद्ध° ADE °भ्रम° C °पात° B °मायेन्द्र° AC °प्लुत° E °प्लुतलङ्घिताढ्या B °लंघिताद्या C °ताद्या [5]) E ओजस्विवर्णाद्भुतदुर्विगाढा C ओजस्विवर्णाद्भुतदुर्विगाहा AD °वर्णाद्भुत° BD °गाढा A °भटेति [7]) AD काव्ये शो° B °शोभाकरी E वर्णनीया [8]) D शस्त्रोद्दारित° E शस्त्रो° A °दारि° D द्रक्ताक्तमु° A °फलं C °फलैः D °फलैः [9]) B °स्फूर्जित° (sic) C °स्फूर्जि° ACD °च्चार्चितम् [10]) B क्रोधाद्दावितधीर° C क्रोधोद्दावित° D क्रुद्धोद्दावित° E क्रुद्धोद्गारितधीर° AC °धोरणि° BCD °रण-त्खड्गा° A °मुग्रयदं E °मायदं [11]) B om. युद्धं In A above द्धं in युद्धं is written द्धं [12]) B गर्ज° C गर्जितरवः D गुर्वं E तूर्यं तदीयाकं B विदं

नैते भीमभुजंगभोगरुचयो मेघा इमे तद्गजाः ।
इत्थं नाथ नवाम्बुवाहसमये त्वत्सैन्यशङ्काकुला
ह्यायद्वाहरुचो विरोधिवनितास्त्रस्यन्ति नश्यन्ति च ॥६१॥

पिबन्नसृगदन्मांसमाकर्षन्नन्त्रमालिकाम् ।
कबन्धसंकुले क्रोष्टा भ्रमत्येष महारणे ॥६२॥

॥ अथ सात्वती ॥

दर्पप्रधानाधिकसत्त्ववृत्तिस्त्यागोत्तरोदारवचोमनोज्ञा ।
आश्चर्यसंपत्सुभगा च या स्यात्सा सात्वती नाम मतात्र वृत्तिः ॥६३॥

नातिगूढार्थसंपत्तिः श्रव्यशब्दमनोरमा ।
वीरे रौद्रेऽद्भुते शान्ते वृत्तिरेषा मता यथा ॥६४॥

लक्ष्म्यास्त्वं जनको निधिश्च पयसां निःशेषरत्नाकरो
मर्यादानिरतस्त्वमेव जलधे ब्रूतेऽत्र कोऽन्यादृशम् ।
किं त्वेकस्य गृहागतस्य वडवावह्नेः सदा तृष्णया
क्लान्तस्योदरपूरणेऽपि न सहो यत्तन्महन्मध्यमम् ॥६५॥

1) B *om.* नैते A धैते  2) B °कुल  3) BE *om.* ग्ना BCE °वनिता (in C twice) B नस्यति  4) A पिबन्नसृक् त्वदन्मां° D पिबन्नसृक् स्वदन्मां° BC पिबन्° B °मालि C °मालिका  5) BD कवध° E °सकटे B °सकुलो B महार्णवे  6) *om.* ADE; B °तोमाह  7) A °धिकमत्त्वयुक्त्या त्या° B °स-त्त्वत्या° A °रोदार°  8) BD मता च E मता प्रवृत्ति.  9) C श्रव° D °शब्दा च°  10) रौद्राद्भुते B °रेषात्र कथ्यते  12) B को न्यादृः E न्यादृशे  13) B त्वेतस्य *cdd.* वडवा°  14) D क्रांतस्यो° E °पूरणं न सहसे A °न्मध्यम् B यत्त-न्मानाद्यमध्यमं D °महन्मध्यम E यत्वन्मनारायकमध्यम

स्फारितोत्कटकठोरतारका कीर्णवह्निकणसंततिः क्रुधा ।
दुर्निमित्ततडिदाकृतिर्बभौ दृष्टिरिष्टसमरांशुमालिनः ॥ ६६ ॥

अत्यद्भुतं तव नराधिप कीर्तिर्धवलयत्यपि जगन्ति ।
रक्तान्करोति सुहृदो मलिनयति च वैरिवदनानि ॥ ६७ ॥

निवृत्तविषयासङ्गमधुना सुचिराय मे ।
आत्मन्येव समाधानं मनः केवलमिच्छति ॥ ६८ ॥

*॥ अथ भारती ॥*

प्रधानपुरुषप्राया सद्वक्तोक्तिनिरन्तरा ।
भारतीयं भवेद्वृत्तिर्वीरहास्याद्भुताश्रया ॥ ६९ ॥

जन्मदेहवधवेदनादिकं तुल्यमेतदितरैः समं सताम् ।
यत्तथापि विपुलाश्चलाः श्रियः सा हि सैकपरतात्र कारणम् ॥७०॥

यशोदाकृतरक्षस्य शासितुर्भुवनद्रुहाम् ।
बाल्ये निभृतगम्भीरो हरेर्हासः पुनातु वः ॥ ७१ ॥

[1]) A *om.* st. 66, C places st. 67 before st. 66 B स्फारितोत्कट° E स्फारितोत्तर° D नांतवह्नि° [2]) D °मित्तवदसाकृ° C °रिष्टि° D °समत्वाग्मा- लिन. E समरैकमालिन. [3]) E त्यद्य° B नरपते तव CDE नराधिप तव A °लयन्त्यपि C °लयंत्यपि [4]) A रक्तां C मित्र° A °नयन्ति A *om.* च [5]) B निवृत्ति° AC °मधुरं B सुचिरायंत C °रान्मन E ते [6]) C °धीनं [7]) *om.* ABDE; C adds इति: [8]) A °प्राय: E °पुरुषोत्तमा वा यद° D सत्योद्रिक्त° [10]) A 1. hd. °देहवदा° corr. 2. hd.; D °देहगुणच्छेद° E °देहधनच्छेद° A साधिकं A °दितरैस्समं सतो D सता [11]) A °ला चलश्रिया C °ला: चला श्रिय. B सहसैकपरता सं का° A °परताश्रया° or °ताश्रया° E °परता नु का° [12]) D शसितु° C °दुर्जन° [13]) A बाल्ये निभृ° ग° C हरेर्हासो A न.

निर्भयोऽप्येष भूपालस्तद्ददाति द्विषां युधि ।
दिगन्तेषु यशः शुभ्रमादत्ते चेदमद्भुतम् ॥ ७२ ॥

इत्यादि रम्याः प्रविलोक्य वृत्तीर्दृष्ट्वा निबन्धांश्च महाकवीनाम् ।
आलोक्य चौचित्यमिदं विदध्यात्काव्यं कविः सज्जनचित्तचौरम् ॥ ७३ ॥

विरसं प्रत्यनीकं च दुःसंधानरसं तथा ।
नीरसं पात्रदुष्टं च काव्यं सद्भिर्न शस्यते ॥ ७४ ॥

विहाय जननीमृत्युशोकं मुग्धे मया सह ।
यौवनं मानय स्पष्टमित्यादि विरसं मतम् ॥ ७५ ॥

प्रबन्धे नीयते यत्र रस एको निरन्तरम् ।
महतीं वृद्धिमिच्छन्ति विरसं तच्च के चन ॥ ७६ ॥

नखक्षतोच्छलद्रक्तप्लुतगण्डस्थलं रतौ ।

[1]) A निर्भयि प्येव भूपालो ज्ञस्तद्द° B भूपाल भयं ददाति D प्येव स भूपालस्तद्ददा (sic) [2]) A·····न्तेषु य 'भ्रमा° CE यशान्तेषु D श्रशतापूर्न् B °मादत्ते D चेद्भुतं E चैतदद्भुतं [3]) A रम्याः B रम्या A प्रविलासवृत्ते दृ° B ययोगांश्च [4]) D विलोक्य A वैचित्र्यमिदं B यौचि° C चौचित्य° D वैचित्र्यमल्लं E वैचित्र्यमल A °चौरान् D °चोरं [5]) A प्रत्यनी····दुसं° [6]) CE च व (om. E) सद्भिः काव्यं न श° A om. च A सद्भिर्निंद्य° C adds: ॥ विरसं यथा ॥ [7]) B जननी° A °मृत्युश्शोकं E जननीं विहाय मृत्युशोकं दुःखे मया सह [8]) A स्पष्ट° ACD विरसं यथा E स्मृता [9]) B नीयते ACE यत्तु [10]) E महती वृत्तं निर्दंति AB वृद्धिमि° B नीरस तत्र D केचन [11]) A नखक्षतोच्छलत्प्लुतिप्लुत° C °लत्प्लुतप्लुत° D °लत्प्लुतप्लुतं गंड° E नखक्षतान्नलसत्प्लुतिप्लुत° B °क्षतस्फुटगंड°

निर्भयो ऽप्येष भूपालस्तद्ददाति द्विषां युधि ।
दिगन्तेषु यशः शुभ्रमादत्ते चेदमद्भुतम् ॥ ७२ ॥

इत्यादि रम्याः प्रविलोक्य वृत्तीर्दृष्ट्वा निबन्धांश्च महाकवीनाम् ।
आलोक्य चौचित्यमिदं विदध्यात्काव्यं कविः सज्जनचित्तचौरम् ॥ ७३ ॥

विरसं प्रत्यनीकं च दुःसंधानरसं तथा ।
नीरसं पात्रदुष्टं च काव्यं सद्भिर्न शस्यते ॥ ७४ ॥

विहाय जननीमृत्युशोकं मुग्धे मया सह ।
यौवनं मानय स्पष्टमित्यादि विरसं मतम् ॥ ७५ ॥

प्रबन्धे नीयते यत्र रस एको निरन्तरम् ।
महतीं वृद्धिमिच्छन्ति विरसं तच्च के चन ॥ ७६ ॥

नखक्षतोच्छलद्रक्तलुप्तगण्डस्थलं रतौ ।

[1]) A निर्भयि प्येव भूपालो त्रस्तादूद° B भूपाल भयं ददाति D प्येव य भूपालस्तद्ददा (sic) [2]) A·····न्तेषु य 'भ्रमा° CE यपन्तेषु D अपतोषून् B °मावत्ते D चेद्रुतं E वंतद्भुतं [3]) A रम्याः B रम्या A प्रविलासवृत्ते दृ° B प्रयोगांश्च [4]) D विलोक्य A वैचित्र्यमिद् B श्चौचि° C चौचिंत्य° D वैचित्र्यमल E वैचित्र्यंमल A °चोरान् D °चोरं [5]) A प्रत्यनो····दुसां° [6]) CE च व (om. E) सद्भिः काव्यं न प्र° A om. च A सद्भिर्निंद्य° C adds: ॥ विरसं यथा ॥ [7]) B जननो° A °मृत्युशोक E जननीं विहाय मृत्युशोकं दृ.चे मया सह [8]) A स्पष्ट° ACD विरसं यथा E स्मृतं [9]) B नीयते ACE यत्तु [10]) E महती वृत्तं निच्छति AB वृत्तिमि° B नीरसं तत्र D केवल [11]) A नखक्षतोच्छलल्लतूलितुत° C °लत्पूयप्लुत° D °लत्पूयपुतं गड° E नखक्षतान्लसत्पूतितुत° B °दक्तल्मुदांड°

D: ॥ इति शृंगारतिलके तृतीयः परिच्छेदः ॥ ॥ इति रुद्रभट्टविरचिते काव्यालंकारे शृंगारतिलकाभिधाने तृतीयः परिच्छेदः ॥

E: ॥ इति श्रीभट्टश्रीरुद्रविरचिते शृंगारतिलके काव्यालंकारे तृतीयः परिच्छेदः ॥ इति शृंगारतिलकः समाप्तः ॥

भग्नपृष्टिकटिग्रीवस्तब्धदृष्टिरधोमुखं ।
कष्टेन लिखितं ग्रंथं यत्नेन परिपालयेत् ॥ १

संवत् १८७७ अषाढ शुक्ल ३ गुरुवासरे ॥

---

व्युत्पत्तये निषेवन्ते कवयः कामिनश्च यम् ॥ ८३ ॥

कान्या काव्यकथा कीदृग्वैदग्धी को रसागमः ।
किं गोष्ठीमण्डनं हन्त शृङ्गारतिलकादृते ॥ ८४ ॥

त्रिपुरवधादेव गतामुल्लासममुमां समस्तविबुधनुताम् ।
शृङ्गारतिलकविधिना पुनरपि रुद्रः प्रसादयति ॥ ८५ ॥

॥ इति श्रीरुद्रभट्टविरचिते शृङ्गारतिलकाभिधाने काव्यालंकारे तृतीयः परिच्छेदः ॥

[1]) A निषेवन्तु कवय× कामिनस्त्वयम् B कामिनः स्वय C कामितश्च E यं B काम्या CD रम्या E काव्या B कीदृक् वैदग्ध्ये A °ग्वैदग्धे [3]) CD गोष्टी° E गोष्टीविबुधैः सार्द्ध शृ° ACD °तिलक विना D °वधदेवतामुचितोल्ला° E गता-वल्लासममाउतोमुल्लासुमा C °विबुनतां D °विबुधनता E °विबुधाना B °नुत A °लक वि° [4]) E रुद्रः सदा प्र° B प्रकटयति [5]) A: ॥ इति श्रीमद्रुद्रटविरचिते °काख्ये काव्यलङ्कारे तृतीय परिच्छेद. ॥

B: ॥ इति श्रीशृंगारतिलके श्रीरुद्रविरचिते काव्यालंकारे तृतीय. परिछेद. समाप्तः ॥

सहानुभावव्यभिचारिभिः समं समेत्य तद्रसाद् सात्विकैश्च ।
यालंबते गर्वरसानतो यमालवनस्तेन भवेद्विभावः ॥
न चानुभावव्यभिचारियोगं नापेक्षते सात्विकभावयोगं ।
उद्दीपयेत् केवलमेव यस्माद्दुद्दीपनस्तेन भवेद्विभाव. ॥

॥ सवत् १६५४ समये भाद्रसुदि १० शुक्रे लिखितं ॥ In margin of fol. 30[b] above stands with thick letters: काव्यालंकारे तु शृगार:

C: ॥ इति श्रीरुद्रभट्टविरचिते शृंगारतिलके काव्यालंकारे रसनिरूपणं ना तृतीयः परिछेदः समाप्तम् संपूर्णम् ॥ समाप्तश्चाय शृंगारतिलकनामको ग्रंथः ॥ शुभमस्तु ॥ श्रीरामाकृष्णाय नम. ॥ श्रीजानकीवल्लभाय नम. ॥ इ ॥ इ ॥ इ ॥ From दः in परिछेदः written by an other hand with great letters. At fol. 34[b] stands: रुद्रभट्टकृतशृंगारतिलक अलंकार ग ८५० and with thin letters: का° ल २८

---

श्रीमतामुत्कर्षपरिज्ञानाद्वैदग्ध्येन सहृदयत्वान्नागरिकता-सिद्धिः ॥१॥ युवत्यादीनामुत्कर्षो देहे गुणालंकारजीवितपरिकरेभ्यः ॥२॥ तत्र । शोभाविधायिनो धर्मा गुणाः ॥३॥

रूपं वर्णः प्रभा राग आभिजात्यं विलासिता ।
लावण्यं लक्षणं छाया सौभाग्यं चेत्यमी गुणाः ॥४॥

अवयवानां रेखास्पाष्ट्यं रूपम् ॥५॥ गौरतादिधर्मविशेषो वर्णः ॥६॥ काचकाच्यरूपा रविवत्कान्तिः प्रभा ॥७॥ नैसर्गिकस्मेरत्वमुखप्रसादादिः सर्वेषामेव चक्षुर्बन्धको धर्मो रागः ॥८॥ कुसुमधर्मा मार्दवादिर्लालनादिरूपः स्पर्शविशेषः पेशलताख्य आभिजात्यम् ॥९॥ अङ्गोपाङ्गानां यौवनोद्भेदी मन्मथवासनाप्रयुक्तः कटाक्षादिवद्विभ्रमाख्यश्चेष्टाविशेषो विलासिता ॥१०॥ तरङ्गिद्रवस्वभावाप्यायिनेत्रपेयव्यापि-स्निग्धमधुर इव पीतिमोत्कर्षैकसार इव पूर्णेन्दुवदाह्लादको धर्मः संस्थानमुग्धिमव्यंग्यो लावण्यम् ॥११॥ अङ्गोपाङ्गानामसाधारणशोभाप्राशस्त्यहेतुरौचित्यात्मा स्थायी धर्मो

[1]) A ० स्वस्ति ॥ B श्रों ग्रथ सहृदयलीला लिख्यते ॥ [2]) B देहगुणा° [5]) A रागः B याद्विज्ञात्यं [6]) A काच्यकचा° A नैसर्गिकः स्मेर° [10]) B कुसमधर्मा मार्दवादि° A °र्लालनान्यो रूपस्य° [14]) A °व्यङ्गो A °पाङ्गमसाधारणाः शो° [15]) A °चित्यात्स्थायी

पुलकरुधिराक्षभीष्मस्फटिकप्रवालरूपाणि त्रयोदश रत्नानि ॥२॥ हेम नवधा । जाम्बूनदशातकौम्भहाटकवैणवशृङ्गीशुक्तिजजातरूपरसविद्धाकरोद्गतभेदात् ॥३॥ चतुर्धा रत्नहेममयः । आविध्यनिबन्धनीयप्रक्षेप्यारोप्यभेदात् ॥४॥ तत्र । ताडीकुण्डलश्रवणवालिकादिराविध्यः । अङ्गदश्रोणीसूत्रमूर्धमणिशिखादण्डिकादिर्निबन्धनीयः । ऊर्मिकाकटकमञ्जीरसदृशः प्रक्षेप्यः । प्रालम्बमालिकाहारनक्षत्रमालाप्रभृतिरारोप्यः ॥५॥ चतुर्धांशुकमयः । वल्कफलकृमिरोमजत्वात्क्रमेण क्षौमकार्पासकौशेयराङ्कवादिभेदात् ॥६॥ पुनस्त्रिधा निबन्धनीयप्रक्षेप्यारोप्यवैचित्र्यात् ॥७॥ तत्र । निबन्धनीयः शिरःशाटकजघनवसनादिः । प्रक्षेप्यः कञ्चुलिकादिः । आरोप्य उत्तरीयपटादिः ॥८॥ सर्वस्यास्यानेकविधत्वं वर्णविच्छित्तिनानात्वात् ॥९॥ ग्रथिताग्रथितवशाद्द्विविधः सन्नष्टधा माल्यमयः ॥१०॥ वेष्टितविततसंघात्यग्रन्थिमदवलम्ब्यमुक्तकमञ्जरीस्तवकलक्षणमाल्यभेदेन ॥११॥ तत्रोद्वेष्टितं वेष्टितम् । पार्श्वतो विस्तारितं विततम् । बहुभिः पुष्पैः समूहेन रचितं संघात्यम् । अन्तरान्तरा विषमं ग्रन्थि-

[1]) B °स्फटिकविद्रुमरूपाणि *add.* °प्रवाल° [3]) B शुक्तिजातरूप° B रत्न हेममय. [4]) A °भेदेन A *om.* तत्र B *om.* ताडी [5]) B °श्रोणि° [6]) A ऊर्मिकटक° [7]) A प्रलम्ब° A °नक्षत्र° A °क्रिमि° B °क्रमि° [9]) B वर्ण° B °भेदः. [10]) A °चित्र्यात् B °रोप्यभेदात् A *om.* तत्र B शिरःशाटक° [11]) A प्रक्षेप्या [12]) B वर्णवि° [13]) B °वशाद्पुनर्द्विविध [14]) A °संघात्य° [15]) AB °स्तबक° A *om.* तत्र [17]) A संघात्यं B °रैः समूहेनरचितम् ।

लक्षणम् ॥१२॥ तस्य युक्तप्रमाणतादोषस्पर्शस्निग्धवक्रनियतलोमाङ्गसुश्लिष्टसंधानतानारूपरिणाहौचित्यचक्रपद्मादिलेखाङ्कनायोगेभ्यः प्रसिद्धाङ्गपूर्णतादोषवैकल्यधर्मसौन्दर्यप्रमाणौचित्यलोकाप्रसिद्धविशिष्टाङ्गयोगाख्याः क्रमेण षड् भेदाः ॥१३॥ अग्राम्यतया वक्रिमवल्यापिनी ताम्बूलपरिधाननृत्तभणितिगमनादिस्थानकेषु सूक्ष्मा भङ्गिश्छाया ॥१४॥ स्फुरच्छन्दम्युपभोगपरिमलादिगम्यो ऽन्तःसारो रञ्जकतया वशीकर्ता सहृदयसंवेद्यधर्मभेदश्च सौभाग्यम् ॥१५॥ तत्राद्ये स्मरमदपुलकादयो भेदाः । अन्त्ये तु मणितनूपपरिभोगाधरास्वादसौरभादिभिर्युगपद्रसवत्त्वात्पञ्चेन्द्रियसुखलाभः ॥१६॥

॥ इति श्रीराजानकरुय्यकविरचितायां सहृदयलीलायां गुणोल्लेखः प्रथमः ॥

रत्नं हेमांशुके माल्यं मण्डनद्रव्ययोजने ।
प्रकीर्णं चेत्यलंकाराः संनिवेते मया मताः ॥१॥

तत्र । वज्रमुक्तापद्मरागमरकतेन्द्रनीलवैदूर्यपुष्यरागकर्केतन-

1) B °कता ऽदोष° A °दोषास्य° A °नियतलेपाङ्ग° 4) B °चित्याख्यालोकाप्रसिद्धाविं° 5) B वक्रिमत्वस्या° 6) B भङ्गिच्छाया स्मरलक्ष्मोः ॥ उपभोग° 7) B om. मलादि A न्तस्सारे B न्तस्मारो 10) A °गाधार° B °भोगधाराकुपवसौर° A °न्द्रियेसुख° 13) B adds ॥ १ ॥ 14) A श्रो° B ॥ श्रीगणेशाय नमः ॥ 15) B प्रकोर्लं 16) B पुष्यराग° A °कर्केतक° B °कर्के°

धम्मिल्लरचनालकभङ्गनीविनह्नदत्तपरिकर्मपरिष्करणादर्पणेक्षणपुष्पोच्चयमाल्योम्भनजलक्रीडाद्यूताश्लीलच्छेकभणित्यनिमित्तलज्जानुभावशृङ्गारशिक्षादय आवर्तमानाश्चेष्टाः ॥५॥ अन्त्ये तु शृङ्गारानुभावतारतम्यं ज्ञेयः ॥६॥

॥ इति सहृदयलीलायां जीवितोल्लेखस्तृतीयः ॥

शोभाया आरादुपकारकत्वाद्व्यञ्जकः परिकरः ॥१॥ तस्य चेतनाचेतनयोः स्थाणुचलयोः प्रत्येकं श्लिष्टसंनिहितमात्रत्वेनाष्टविधत्वम् ॥२॥ उत्सङ्गोपासीनकान्तहयपरिवारवातायनवितानमौक्षत्रादीनि दर्शनानि ॥३॥ तानि द्विधा व्यस्तसमस्तभेदात् ॥४॥ एवं शोभासमुत्पादकसमुद्दीपकानुप्राणकव्यञ्जकाः क्रमाद्गुणालंकारजीवितपरिकराः ॥५॥ एवं परस्परोपकारकत्वादितरेतरानुग्राहकत्वं सिद्धम् ॥६॥

॥ इति सहृदयलीलायां परिकरोल्लेखश्चतुर्थः ॥

॥ समाप्तेयं सहृदयचमत्कारिणी सहृदयलीला । कृतिः श्रीविपश्चिद्वरराजानकतिलकात्मजश्रीमदालंकारिकसमाजाग्रगण्यश्रीराजानकरुय्यकस्य राजानकरुचकापरनाम्नोऽलंकारसर्वस्वकृतः ॥

[1]) B धम्मिल° A °रचनालकभङ्गोविनह्न° [3]) B °लज्जानभाव° [5]) A *om.* इति A °ल्लेखः तृ° B °ल्लेखस्तृ° [6]) A शं B ॥ श्रीगणेशाय नमः ॥ [7]) B स्थाणु° B °मात्रत्वेना° [9]) A °नौच्छ° B °नाच्छोत्रा° B निदर्शनानि [11]) A °करा A °पकारत्वादि° [13]) A *om.* इति B ॥ इति श्रीराजानकरुय्यकविरचितायां सहृ° A °ल्लेखः च° [14]) B समाप्तेयं सहृदयली कृतिश्श्रीविपश्चिद्वरराजानक° [15]) B °कृतः

मत् । स्पष्टोम्भितमवलम्बम् । केवलं मुक्तकः । अनेककुसुममयी लता मञ्जरी । कुसुमगुलुच्छं स्तबकः ॥१२॥ तस्याविध्यादयो ऽपि चत्वारो भेदाः ॥१३॥ कस्तूरीकुङ्कुमचन्दनकर्पूरागुरुकुलकदलसमपटवाससद्धकारतैलताम्बूलालक्तकाञ्जनगोरोचनादिनिर्वृत्तो मण्डनद्रव्यमयः ॥१४॥ अघटनालकरचनाधम्मिल्लबन्धादियोजनामयः ॥१५॥ द्विधा प्रकीर्णमयः ॥१६॥ जन्यनिवेश्यभेदेन ॥१७॥ श्रमजलमधुमदादिर्जन्यः । दूर्वाशोकपल्लवयवाङ्कुररजतत्रपुशङ्खतालदलदन्तपत्त्रिकामृणालवलयकरक्रीडनकादिर्निवेश्यः ॥१८॥ एतत्समवायो वेषः ॥१९॥ स च देशकालप्रकृत्यवस्थासात्म्येनैतेषां विच्छित्त्या यथास्थाननिवेशनपरभागलाभाद्रामणीयकवृद्धिः ॥२०॥

॥ इति सहृदयलीलायामलंकारोल्लेखो द्वितीयः ॥

शोभाया अनुप्राणकं यौवनाख्यं जीवितम् ॥१॥ बाल्यानन्तरं गात्राणां वैपुल्यसौष्ठवविभक्तताविधायी स्फुटितदाडिमोपमः स्मरवसतिरवस्थाभेदो यौवनम् ॥२॥ तस्य वयःसंधिरारम्भः ॥३॥ मध्यं तु प्रौढिकालः ॥४॥ प्रथमे

1) B °तजल° 2) B कुसुमातलच्छ AB स्तजक 3) B कस्तूरी° B om. कुलकदन्तशम A °दन्त° 6) B °धम्मिल° 7) A °मधू° 9) B °पत्रिका° 10) AB वेशः B स चेद्शकालप्रकृत्य° 13) A om. इति 14) A श्रो॰ B श्रीगणेशाय नमः ॥ A बाल्यान्तरं 15) B मद्रस्फुटो दाडिमोपम. ॥ स्मर° 17) B °रम्भा

Sarasvatîkaṇṭhâbharaṇa 5, 165. — 10. *Regnaud* l. c. p. 319 ff. Rasagangâdhara p. 53 f. Sarasvatîk. 5, 14. Pratâpar. 4, 4. — 11—14. *Regnaud* l. c. p. 327 ff. Rasagangâdhara p. 54 ff. Sarasvatîk. 5, 16 ff. Pratâpar. 4, 8. — 15. *Regnaud* l. c. p. 347 ff: Sarasvatîk. 5, 15. Pratâpar. 4, 7. — 19. Bhâratîyanâṭyaçâstra 20, 1 ff. Daçarûpa 2, 44 ff. Sarasvatîk. 2, 34 ff. Pratâpar. 2, 12 ff. Sâhityadarpaṇa 410 ff. Agnipurâṇa 339, 5. — 21. 22. *Regnaud* l. c. p. 301 ff. Vâgbhaṭâlamkâra 5, 4 f. Sarasvatîk. 5, 10 ff. p. 310 ff. Candrâloka 6, 5. Rasagangâdhara p. 58, 6 ff. Pratâpar. 4, 85, where 22, 1 is quoted. — 27. Vâgbhaṭâl. 5, 6. Sâhityad. 64. Daçar. 2, 1. 2. Pratâp. 1, 22. — 28. Vâgbhaṭâl. 5, 7. Sarasvatîk. 5, 110. Pratâpar. 1, 32. Agnipurâṇa 338, 38. cfr. Bhâratîyan. 34, 4. Daçar. 2, 2. Sâhityad. 65. Pratâpar. 1, 24. Agnip. 338, 37. 38. — 30. Quoted: *Vâgbhaṭa*, Alamkâratılaka fol. 24ᵃ. Sâhityad. p. 34. 46. Çârngadharapaddhati ZDMG. 27, 80. *Translated by Böhtlingk, Indische Spruche I², 800.* — 32. Quoted: Alamkâratilaka fol. 24ᵃ. — 35. Quoted: Alamkâratilaka fol. 23ᵇ. Çârngadharapaddhati ZDMG. 27, 80. cfr. Amaru v. 8 (Ind. Spruche I², 1938). मोहनमन्दिर = केलिनिकेतन (Amaru) or रतालय below 1, 137. cfr. मोहनगृह below 1, 138. — 39—41. Bhâratîyan. 34, 105 f. (viṭa). 108 (vidûṣaka). Daçar. 2, 7 f. Sâhityad. 76 ff. Pratâpar. 1, 38. Agnip. 338, 39. 40. — 46. Bhâratîyan. 34, 7. Sarasvatîk. 5, 112 f. Vâgbhaṭâl. 5, 10. Daçar. 2, 14. Sâhityad. 96. Agnip. 338, 41. — 47. Sarasvatîk. 5, 111. Daçar. 2, 14. Sâhityad. 98. Pratâpar. 1, 49. — 48. Daçar. 2, 15. Sâhityad. 99. Pratâpar. 1, 49. — 53. Quoted: Alamkâratilaka fol. 24ᵇ. — 54. निर्बन्धैर्भी° means, I think, „with whims (freaks) by which children (young persons) are frightened“. Stanza 55 gives an example of it. — 58. Daçar. 2, 15. Sâhityad. 100. ,Pratâpar. 1, 49. — 62. Quoted: Sâhityad. p. 41 (l. 4: °र्यचारणाः), translated by *Böhtlingk*, Ind. Sprüche I², 1632. — 65. Daçar. 2, 16. Sâhityad. 102. 103. — 68: Quoted: Pañcatantra 4, 9 (ed. Kosegarten) Sâhityad. p. 43. Çârngadharap. ZDMG. 27, 81, translated by *Bohtlingk*, Ind. Spruche III², 7028, where the various readings are given. — 69. Daçar. 2, 17. Sâhityad. 101. Pratâpar. 1, 49. — 71. Quoted: Vetâlapañcaviṁçatikâ (ed. Uhle) p. 14, 20 ff., corrected

# Notes.

## I. Notes on Rudraṭa.

1. This stanza is quoted by *Hemacandra*, Alamkâracûḍâmani fol. 17ª (MS. Kielhorn, Report on the Search for Sanskrit MSS. Bombay 1881 p. 102 No. 265 (A); or fol. 38ª MS. Gough, Papers relating to the Collection etc. Calcutta 1878 p. 99 No. 398 (B) and by *Vâgbhata*, Alaṁkâratılaka fol. 23ᵇ MS. Kielhorn l. c. p. 71 No. 300). H.'s MSS. read l. 2 °हृत्कपो च l. 3 °विमर्दने च l. 4 °रसात्मक°. Vâgbhaṭa's readings I have not noted. Compare the stanza सव्रीडा दयितानने *Kávyaprakáça* p. 196, which is also quoted by *Hemacandra* l. c. fol. 17ª; *Vágbhata* l. c. fol. 23ᵇ; *Bálakṛṣṇa*, Alaṁkârasâra fol. 32ᵇ (MS., Lists of Sanskrit MSS. collected for the Government of Bombay in 1879—80 and 1881—82 p. 9 No. 23); *Jayaratha*, Alamkâravimarçinî fol. 81ª (MS. Bühler, Detailed Report App. I p. XV No. 230) and Alaṁkârodâharaṇam fol. 12ª (MS. Bühler l. c. No. 240); *Keçava*, Alamkâraçekhara fol. 35ᵇ (MS. Buhler l. c. No. 235). — 2. चतुरस्र = correct. — 3. Edited and translated by *Aufrecht*, ZDMG. 25, 240. The last verse is quoted inaccurately by Ujjvaladatta on the Uṇâdisûtras 3, 47. — 6. Quoted by *Vâgbhaṭa*, Alamkâratilaka fol. 21ª, who also reads लक्ष्मीरिव श्रुते. cfr. Agnipurâṇa 338, 9. Edited and translated by *Aufrecht*, ZDMG. 25, 240. Ind. Sprüche III², 5465. cfr. *Uhle* on Vetâlapañcavimçatikâ p. 5 st. 3 p. 93. — 9. cfr. *Regnaud*, La Rhétorique Sanskrite Paris 1884 p. 301 with notes. Add: Rasagaṅgâdhara p. 50 f. At p. 51 Nâgeçabhaṭṭa quotes our stanza. Candrâloka 6, 5 ff. Vâgbhaṭâlaṁkâra (ed. Anundoram Borooah) 5, 3. Pratâparudriya (ed. Madras 1868) 4, 3.

heroine is called विरहोत्कण्ठिता. — 136. Quoted: Alaṁkâratilaka fol. 25ᵃ. Sâhityad. p. 49. 74. (l. 1 ममोद्देशितः l. 2 यन्नायागतो l. 3 विन्यस्य.) Translated by *Böhtlingk*, Ind. Spr. I², 1718. — 137. Daçar. 2, 23. Sâhityad. 120. Sarasvatîk. 5, 118. Pratâpar. 1, 41. — 139. Daçar. 2, 24. Sâhityad. 117. Sarasvatîk. 5, 116. Pratâpar. 1, 45. In all these works the name of this kind of heroines is कलहान्तरिता. — 141. Daçar. 2, 25. Sâhityad. 118. Sarasvatîk. 5, 117. Pratâpar. 1, 43. — 142. Quoted: Alaṁkâratilaka fol. 25ᵃ. — Alaṁkâracûḍâmani fol. 44ᵃ. — 143. Daçar. 2, 24. Sâhityad. 114. Sarasvatîk. 5, 115. Pratâpar. 1, 44. — 145. Daçar. 2, 25. Sâhityad. 115. Sarasvatîk. 5, 120. Pratâpar. 1, 47. — 147. गर्त्तित् is, I think, the correct reading. It is also intimated in A. In none of the passages quoted by Böhtlingk nor below 3, 61 the gender of गर्त्ति is distinguishable. — 147. Daçar. 2, 25. Sâhityad. 119. Sarasvatîk. 5, 120. Pratâpar. 1, 46. — 151 ff. Sâhityad. 116. — 155. Sâhityad. 122. — 157. This stanza is an imitation of Amaru st. 53. Hence the interpolation in D. — 159. प्रत्यक्लित = „mixed with“, „sticking to“. — 165. तोदपा = „an ascetic“.

---

1. Sarasvatîk. 5, 46. p. 310, 11 ff. Sâhityad. 213. Agnipurâṇa 341, 5. — Kâvyaprakâça p. 53, 11. Rasataranginî p. 59, 11 f. Rasagangâdhara p. 60, 4 ff. divide the *vipralambha* into five kinds: *abhilâsa, viraha* (Rasat. instead: *gurunirdeça*), *îrṣyâ, pravâsa* (Rasat. *deçântaragamana*), *çâpa*. The Daçarûpa 4, 53 divides it into two kinds only: *mâna* and *pravâsa*. Hence the assertion of Jagannâtha that the old ones (*prâñcaḥ*) state five kinds is wrong. cfr. *Regnaud* l. c. p. 303 ff. — 2. Sâhityad. 214. — 4. cfr. Kâvyâdarça 2, 41. — 6 ff. Daçar. 4, 48 ff. Sâhityad. 214. Commentary on Hâla st. 185 (minor edition, from the Kâmaçâstra). cfr. Bhâratîyan. 6, p. 5, 19 f.: वैशिकशास्त्रकारैश्च (thus Pûna MSS.) दशावस्थोऽभिहितः (scil. शृङ्गारः). — Sarasvatîk. 5, 98 ff. and Pratâpar. 4, 73 (कामशास्त्रानुसारतः । केचित्तु दशावस्था इति कथयन्ति) distinguish 12 *avasthâs*. Kumârasvâmin in his commentary on the last passage has the following quotation: ॥ यत्र

and translated by *Aufrecht*, ZDMG. 36, 376, who also compares Çiçupâlavadha 10, 76. — 72. Quoted: Sâhityad. p. 42 (l. 1 सतिलक भालं l. 3 °तावसानसमये l. 4 तथैव). — 73. Quoted: Sâhityad. p. 42 (l. 2 °सैर्महोत्सवव्र° l. 3 °विलोकितैस्). — 75. Quoted: Çârngadharap. l. c. p. 80 and by Ananta in the Commentary on the Rasamañjari fol. 19ª (MS. Bhandarkar Report 1882/83 No. 215) (v. 1 धन्यास्ताः v. 3 °त्यशुके v. 4 किं नु सुरतं स्वल्पापि मे न स्मृतिः). *Aufrecht* (ZDMG. 27, p. 80 remarks that this stanza is an imitation of Amaruka's stanza धन्यासि या कथयसि. Why Aufrecht ascribes this stanza to Amaru, I dot not know. Cfr. *Bohtlingk*, Ind. Spruche II², 3080 with the note. I have found it quoted also in the Alamkâraratnâkara fol. 31ª (MS. Buhler, Det. Report No. 227). Aufrecht probably had in view the stanza कान्ते तल्पमुपागते which is quoted: Daçar. p. 80. Alamkâracûdâmaṇi fol. 14ᵇ. Sarasvatik. p. 286. Vetâlap. p. 49 and in the Çârngadharap. is attributed to Amaruka. — 76. Sâhityad. 104. — 78. Quoted: Alamkâracûdâmani fol. 43ᵇ (fol. 100ª MS. B) I, 3 °प्राडुन्निद्रा° l. 4 मानिन्याः). — 79. Daçar. 2, 18. Sâhityad. 105 f. — 81. Edited and translated from the Çârngadharap. by *Aufrecht*, ZDMG. 27, 81. (l. 2 शठेति निरारं सभर्त्स्य संतर्ज्य च). — 83. Daçarûpa 2, 18. Sâhityad. 107. — 86. Daçar. 2, 14. Sâhityad. 97. The proper place of this st. would be before st. 47. — 87. Daçar. 2. 19. Sâhityad. 108. — 89. निग्रामय, which is given by the best MSS., must be taken in the sense of निशम्य; मनोरमस्वर „the voice of her lover“. As to मनोरम cfr. below 2, 80. — 90. निशान्त = अन्तःपुर. — 95. Quoted: Çârngadharap. l. c. 27, 81. — 114. Edited and translated from the Çârngadharap. by *Aufrecht* l. c. 27, 80. — 120 ff. Daçar. 2, 20 f. Sâhityad. 111. Vâgbhaṭâl. 5, 14 f. Sarasvatik. 5, 113 f. — 121. वत्सलत्वानया युक्त्या „because it is very fit for them“. — 127. Quoted: Alamkâratilaka fol 24ᵇ; Alamkâracûḍâmaṇi fol. 44ª (l. 1 Ac.: °लिङ्गित° l. 2 °सोत्कृतलसद्भ्रांतं तु नृ° v. 3 धातै ह्नैश्चा°. — 131 f. Daçar. 2, 22. Sâhityad. 112. Sarasvatik. 5, 114. Pratâpar. 1, 39. — 133. Daçar. 2, 22. Sâhityad. 113. Sarasvatik. 5, 119. Pratâpar. 1, 40. — 134. Quoted: Alamkâratilaka fol. 24ᵇ. — 135. Daçar. 2, 23. Sâhityad. 121. Sarasvatik. 5, 121. Pratâpar. 1, 42. In all these works this

alphabet it is impossible to confound these ligatures; 2) by Raghuvamça 18, 31 where alone पुष्यराग suits to the connexion; cfr. पोष्यं, पुष्यम् श्रपुष्यन् पुष्यः; 3) by the modern languages: Hindî पुखराज, Sindhî पुखिराजु Gujarâti पुखराज, पोखराज, which point to पुष्यराज from which alone they are derivable. cfr. Maithilî पुख, पूख = Puṣya. Hence the Prâkritic form पुप्फराश्र Mṛcchakaṭikâ p. 70, 25 is not correct. The MSS. have पुप्प (A) पुम्म (B) पुस्स (C) पुप्प (D) and the correct form is पुस्सराश्र or पूसराश्र. cfr. Vararuci 3, 58. Hemacandra 1, 43. Hindî, Bihârî पूस. But Pañjâbî पोह, Sindhî पोहु Gujarâtî पोस are to be referred to Skt. पोष. — रुधिराख्य also Agnipurâṇa 245, 4. — From this passage it is evident that भीष्म is not simply = „Edelstein" (Böhtlingk, Worterbuch) but „a certain kind of jewel", which I am unable to determine. It is not mentioned by *Garbe* (Die indischen Mineralien. Leipzig 1882) nor in the Agnipurâṇa Chapter 245. — 5. दृढिका is not found elsewhere. — 14. समपटवास = „perfumed powder composed of several ingredients. cfr. Petersburg Dict., s. v. समगन्धक.




Bonn.
Printed by Charles Georgi.

एवोक्तं भावप्रकाशे ॥ दशधा मन्मथावस्था भवेद्दूरादथापि वा । इच्छोत्कण्ठाभिलाषाश्च चिन्ता स्मृतिगुणस्तुती ॥ उद्वेगोऽथ प्रलापः स्यादुन्मादो व्याधिरेव च । जाड्यं मरणमित्याद्ये द्वे केचिद्वर्जिते बुधैरिति ॥ अन्ये तु ॥ दृङ्मनःसङ्गसंकल्पा जागरः कृशता रतिः । ह्रीत्यागोन्मादमूर्छान्ता इत्यनङ्गदशा दशेत्याहुः ॥ cfr. also *Hall*, Preface to the Daçarûpa p. 34 note. — 12. Quoted: Çârngadharap. l. c. p. 81. — 14. Compare *Uhle* on Vetâlap. p. 190. — 28 f. Sâhityad. 215. — 38. रात्रिचार = „taking place by night". — 50. Quoted: Çârngadharap. l. c. p. 81. — 62 ff. Daçar. 4, 56 ff. Sâhityad. 220. — 69. स्वसंज्ञाकृता = „called (आकृता) by name". — 79. अमुष्यां is the Accus. sing. femin. of a pronoun अमुष्य, which has its origin in the Genit. sing. mascul. of अदस्, appearing as the former part of compounds like अमुष्यपुत्र, अमुष्यकुल. — 102. Daçar. 2, 27. Sâhityad. 157. Pratâpar. 1, 48. — 103. Sâhityad. 158, copied from Rudraṭa. — 105. कदम्ब n. = „flower of the Nauclea Cadamba". — 107. Quoted: Çârngadharap. l. c. p. 80. — 109. कठिन° „full moon". cfr. Çiçup. 1, 20.

---

1 ff. *Regnaud* l. c. p. 306 ff. Vâgbhaṭâl. 5, 20 ff. Candrâl. 6, 6 ff. — 3. Quoted: Alamkâracûdâmaṇi fol. 10b (MS. A; fol. 21b MS. B). — 26. पत्त्रिन means, I think, „vulture". — cfr. Caṇḍakauçikam p. 71, 4 ff. ZDMG. 36, 366 f. — 35—50 are quoted in the Pratâpar. 4, 100. 101 in a somewhat different order and with various readings. — 52 ff. See note on 1, 19. — 60. चतुष्काचित = „adorned with ornaments of pearls". — 62. Quoted: Çârngadharap. l. c. p. 80.

---

## II. Notes on Ruyyaka.

1, 7. काचकाञ्च perhaps means „a string of glass-beads". — 2, 2. Instead of पुष्पराग all lexicographers and editors write पुष्पराग and accordingly पुष्पराग. That this is wrong is proved 1) by the Çâradâ MS. which distinctly writes ष्प and not ष्प. In the Çâradâ